❋ श्रीश्रीगौरगदाधरौ विजयेताम् ❋

# श्रीब्रह्मसंहिता

## श्रील श्रीजीवगोस्वामिकृता टीकोपेता



### श्रीहरिदासशास्त्री

॥ श्रीश्रीगौरगदाधरौ विजयेताम् ॥

# श्रीब्रह्मसंहिता

## [ पञ्चमोऽध्यायः ]

श्रील श्रीजीवगोस्वामिकृता टीकोपेता

हिन्दीटीकया चालङ्कृता

श्रीवृन्दाबनधामवास्तव्येन
न्याय-वैशेषिकशास्त्रिन्यायाचार्यकाव्यव्याकरणसांख्य
मीमांसावेदान्ततर्कतर्कतर्कवैष्णवदर्शनतीर्थ
विद्यारत्नाद्युपाध्यलङ्कृतेन
श्रीहरिदासशास्त्रिणा सम्पादिता ।

सद्ग्रन्थप्रकाशक
श्रीहरिदासशास्त्री
श्रीगदाधरगौरहरि प्रेस, श्रीहरिदासनिवास,
कालीदह, वृन्दाबन, जिला—मथुरा ।
उत्तरप्रदेश

प्रकाशक :— ❊ मुद्रक :—

श्रीहरिदासशास्त्री

श्रीगदाधरगौरहरि प्रेस,

श्रीहरिदास निवास,

कालीदह, वृन्दावन

मथुरा (उत्तर प्रदेश)

प्रकाशनतिथि :—

शरत् पूर्णिमा

२६ आश्विन १३८८

१३ अक्टुबर १९८१

श्रीगौराङ्गाब्द ४९५

प्रकाशन सहयोग २७.००मुद्रा

U.S. Dollars— 3.00

प्रथमसंस्करणम्

* श्रीश्रीगौरगदाधरौ विजयेताम् *

———**——

# विज्ञप्तिः

——**——

विश्वहितव्रती श्रीचैतन्यदेव,-श्रीहरिनाममाधुर्य्यास्वादन में विभोर होने पर भी प्राणीमात्रके कल्याण के निमित्त सदा अवहित थे, मानव को सत् शिक्षासे शिक्षित करने से ही समस्त व्यक्ति सुखी होंगे—इस उद्देश्य से ही दक्षिण देशस्थ तीर्थ भ्रमण के समय स्वयं असंग्रही होकर भी श्रीब्रह्मसंहिता एवं श्रीकृष्णकर्णामृत नामक ग्रन्थ द्वयका आनयन स्वयं किए थे, श्रीचैतन्यचरितामृतकार का कथन है-(श्रीचै० च० ९) मध्य।

ब्रह्मसंहिता कर्णामृत दुइ पुँथि पाइया
महारत्न पाइ आइला सङ्गे लइया।
शास्त्र सिद्धान्त नाहि ब्रह्म संहिता समान,
गोविन्द महिमा ज्ञानेर परम कारण।
अल्प अक्षरे कहे सिद्धान्त अपार,॥

भगवदीय मौलिक तत्त्व सिद्धान्त की भित्ति ब्रह्मसंहिता के अभ्यन्तर में निहित है, अतः यह ही तत्त्व शिक्षा का प्रकृष्टतम ग्रन्थ है। श्रीकृष्णकर्णामृत में अनुराग पूर्ण भजन शिक्षा का निदर्शन है। ब्रह्मसंहिता, शताध्यायी होने पर भी उसका साररूप पञ्चम अध्याय मात्र ही उपलब्ध है, इस में प्रधानतः सर्व कारण तत्त्व(१)धामतत्त्व (२-५) शक्ति शक्तिमत्तत्त्व (६-७) प्रजासृष्टि (९) महाविष्णु (१० नारायण, (११-१४) विष्णु प्रजापतिशम्भु (१५) अहङ्कारात्मकविश्व (१६) योगनिद्रा (१७) सृजनेच्छा ब्रह्मोत्पत्ति (१८-२१) चतुर्म्मुख-ब्रह्मा (२२) सृजनेच्छा (२३) काम गायत्री प्राप्ति, कामबीज काम गायत्री का तात्पर्य्य (२४) तप २५) माधुर्य्य मय श्रीकृष्णतत्त्व (२६) गायत्री मन्त्र से ब्रह्माका द्विजत्व संस्कार (२७) वेदसार के द्वारा केशव की स्तुति (२८) गोलोकीयलीला (२९-३१) परम अचिन्त्य

वैभव (३२) भक्तजनलभ्यत्व (३३-३४) अचिन्त्यशक्ति (३५) तद्भाव भावित हृदय प्राप्य (३६) स्वकीय परकीय विचार (२७) ध्यानयोग अवतारीतत्त्व (३९) ब्रह्मतत्त्व (४०) मायातत्व (४१) कामतत्त्व (४२) पञ्चदेवोपासना, श्रीदुर्गा (४४) श्रीशिव (४५) विष्णु (४६) कारणार्णव शायी (४७) महाविष्णु (४८) सूर्य्य (४९) श्रीगणेश (५०) तत्त्व समूह (५१) सूर्य्य (५२) समस्त पदार्थ की स्थिति (५३) कर्मानुरूप फलदान (५४) भजन विचार (५५) परमधामवर्णन (५६-५७) महत्व विज्ञान, प्रजासृजन के उपयोगी पञ्चश्लोक (५७) प्रेम भक्ति (५८) भक्तिलाभ का उपाय (५९) भक्ति का श्रेष्ठत्व (६०) शरणागति तथा आचरण (६१) सार संक्षेप (६२) इत्यादि विषय समूह इस में अतिसुन्दर, सरल सहज भाव से लिपिवद्ध हैं।

एतत् सह श्रीजीवगोस्वामीपाद रचित दिग्दर्शिनी टीकामुद्रित है, श्रीविश्वनाथचक्रवर्त्तीकृत टीका दुष्प्राप्य है। टीका के मङ्गलाचरण में श्रीजीव गोस्वामीपादने लिखा है--ऋषिगणों के स्मृतिग्रन्थ आपात दृष्टि से दुर्योजनाप्रतीत होने से भी उत्तम रूपसे विचार करने पर वह युक्तार्थ समन्वित ही है, अतएव ऋषिगणों के ग्रन्थ विचार में ऋषियों के ऋषि चतुःसनात्मक श्रीरूप सनातन ही मेरी गति है। यद्यपि यह ब्रह्मसंहिता शताध्यायी है, तथापि प्रस्तुत पञ्चाध्याय सब के सूत्र रूप हैं, समग्र ग्रन्थ का तात्पर्य्य इस में ही निहित है। श्रीमद् भागवतादिग्रन्थ में सूक्ष्मवुद्धि विशिष्ट व्यक्तिगण जिस सिद्धान्त को अवलोकन करते हैं उक्त समस्त सिद्धान्त ही इसमें यथावत् प्रकाशित है। श्रीकृष्ण सन्दर्भ में जिस की आलोचना विस्तृत रूप से हुई है, इस ग्रन्थ की टीका में उस विषय का वर्णन पुनर्वार करने का अवसर आने से ही इस की व्याख्या में मेरी प्रवृत्ति हुई। प्रथम श्लोक का तात्पर्य इस प्रकार है--श्रीकृष्ण-समस्त अवतारों के मूल अवतारी स्वयं भगवान् हैं। "कृष्ण" उनका मुख्यनाम है। नाम करण के समय श्रीगर्ग ने प्रथमतः "कृष्ण" नाम का ही निर्देश किया था। मूलमन्त्र में भी कृष्ण नाम का सर्वप्रथम प्रयोग हुआ है। ग्रन्थ में

'गोविन्द' नाम का उल्लेख है, वह गवेन्द्रत्व रूप अर्थ का प्रकाशक है, गो=इन्द्रिय, गो, सूर्य्यादि ग्रह निचय, वाक्य, इत्यादि का अधिनायकत्वरूप है। 'आसन् वर्णास्त्रयो ह्यस्य श्लोक से भी श्रीकृष्ण में कर्त्तृत्व एवं सर्वोत्कर्षगुण विद्यमान होने से उनका श्रीकृष्ण नाम ही मुख्य है–यह प्रतिपन्न हुआ है। यहाँ "कृष्ण" पद विशेष्य है, अन्यान्य पद विशेषणहै, रूप, गुण, माधुर्य्यादि के द्वारा सर्वाकर्षक आनन्दमूर्त्ति ही श्रीकृष्ण है। आप ही परतमतत्त्व स्वयं भगवान् व्रजेन्द्रनन्दन हैं, आप सर्व शक्तिमान् ईश्वर हैं। उन के श्रीविग्रह अप्राकृत, नित्य चैतन्य आनन्द स्वरूप है, जीवादि के समान मायिक नहीं है। आप अनादि काल से स्वीय नित्य लीलाभूमि श्रीवृन्दावनादि में नित्य विराजमान हैं, आप गोचारण लीला बिनोदी होने से गोविन्द हैं। अनेक शास्त्रों में अनन्त ब्रह्माण्ड के मूल कारण का निर्णय अनेक प्रकार से होने से भी श्रीकृष्ण ही सर्व शास्त्र समन्वय से सर्व कारणों का मूल कारण निर्णीत हुए हैं, इस ग्रन्थ में धामतत्त्व, परिकरतत्त्व लीला रहस्य श्रीविग्रहतत्त्वादि वर्णित है। टीका के उपसंहार में आपने कहा है, शताध्याय सम्पन्ना यह संहिता श्रीब्रह्मा के द्वारा श्री कृष्णोपनिषदों के सार समूह के सञ्चय से प्रकाशिता हुई है। यद्यपि बहुविध पण्डित गण इस संहिता का पृथक् पृथक् पाठ एवं विविध अर्थादि के कल्पना करते हैं, तथापि मैंने साधुसज्जनानुमोदित मार्ग से जो कुछ प्राप्त किया है, उसको ही प्रमाण रूप से स्थापन कियाहै। अतः शिष्टजन का उद्‌घोष है--

श्रीचैतन्यमतानुगा वहुविधैस्तत्त्वैः समुद्‌भासिता,
सद्‌भक्तिप्रतिपालनी सुवचसा प्रेमार्थसंस्थापिका।
जीवातु र्हरिभक्तजीवनिचये चित्तश्रुतिप्रीतिदा,
श्रीजीवप्रतिभा जगद्विजयिणी सर्वैर्धिया धार्य्यताम्॥

हरिदास शास्त्री

❋ श्रीश्रीगौरगदाधरौ जयतः ❋

# ❁ ग्रन्थस्य-श्लोकानि ❁

——❋❁——

इति श्रीब्रह्मसंहितायां भगवत्सिद्धान्तसंग्रहे
मूलसूत्राख्यः पञ्चमोऽध्यायः ॥

## * टीकायामुद्धृतानि वाक्यानि— *

पत्रसंख्या

पत्रसंख्या

पत्रसंख्या

पत्रसंख्या

१२ श्रीप्रेमसम्पुट (मूल, टीका, अनुवादसह) श्रीविश्वनाथचक्रवर्त्ती कृत भागवतीय रास रहस्यवर्णनात्मक हृदयग्राही ग्रन्थ ४.००

१३ भगवद्भक्तिसार समुच्चय (सानुवाद) श्रीलोकानन्दाचार्य प्रणीत भक्तिरहस्य परिवेषक अनुपम ग्रन्थ। ३.७५

१४ भगवद्भक्तिसार समुच्चय (सानुवाद बङ्गला) श्रीलोकानन्दाचार्य प्रणीत, भक्तिरहस्य प्रकाशक मनोहर ग्रन्थ। ३.००

१५ व्रजरीति चिन्तामणि (मूल, टीका, अनुवाद) श्रीविश्वनाथचक्रवर्त्ति ठक्कुर कृत व्रजसंस्कृति वर्णनात्मक अत्युत्कृष्ट ग्रन्थ। ४.००

१६ श्रीगोविन्दवृन्दावनम् (सानुवाद) बृहद् गौतमीय तन्त्रान्तर्गत श्रीराधारहस्य परिवेषक सर्वोत्कृष्ट ग्रन्थ। १.५०

१७ श्रीराधारस सुधानिधि (मूल बङ्गला) श्रीप्रबोधानन्द सरस्वतीपादकृत श्रीराधा महिमा प्रतिपादक अनुपमेय ग्रन्थ। १.७५

१८ श्रीराधारस सुधानिधि (मूल हिन्दी) ०.६०

१९ श्रीकृष्णभक्ति रत्नप्रकाश (सानुवाद) श्रीराघव पण्डित रचित श्रीकृष्णभक्ति प्रकाशक अनुपम ग्रन्थ। ५.००

२० हरिभक्तिसार संग्रह (सानुवाद) श्रीपुरुषोत्तमशर्म प्रणीत श्रीभागवतीय क्रमबद्ध भक्ति सिद्धान्त संग्रहात्मक ग्रन्थ। १२.००

२१ श्रुतिस्तुति व्याख्या (अन्वय, अनुवाद) श्रीपाद प्रबोधानन्द सरस्वती कृत वेदस्तुति की व्रजलीलात्मक व्याख्या। १४.००

२२ श्रीहरेकृष्ण महामन्त्र "अष्टोत्तरशतसंख्यक" ०.४०

२३ धर्मसंग्रह (सानुवाद) श्रीवेदव्यास कृत धर्मसंग्रह श्रीमद्भागवतीय ७म स्कन्ध के अन्तिम ११, १२, १३, १४, १५ अध्यायों का वर्णन। ३,७५

२४ श्रीचैतन्य सूक्ति सुधाकर श्रीचैतन्यचरितामृत, तथा श्रीचैतन्यभागवतीय सूक्तियों का संग्रह। ४.००

२५ सनत् कुमार संहिता (सानुवाद) व्रजीय रागानुगा उपासना प्रतिपादक सुप्राचीन ग्रन्थ। २.५०

❀✻ श्रीश्रीगौरगदाधरौ विजयेताम् ✻✻

——✻✻——

# श्रीब्रह्मसंहिता

## [ पञ्चमोऽध्यायः ]

——:·✻✻·:——

ईश्वरः परमः कृष्णः सच्चिदानन्द विग्रहः ।
अनादिरादि र्गोविन्दः सर्वकारणकारणम् ॥१॥

---

कृष्णः, ईश्वरः, परमः, सच्चिदानन्द विग्रहः, अनादिः आदिः, गोविन्दः, सर्वकारणकारणम् भवति ॥ (१)

---

श्रीकृष्ण, परम ईश्वर हैं, सच्चिदानन्दविग्रह, अर्थात् उनकी श्रीमूर्त्ति, नित्य ज्ञानानन्द स्वरूप है, आप स्वयं अनादि हैं, अतः समग्र तत्व के अनादि हैं, आप सबके मूल हैं, आप के पहले अपर कोई तत्व नहीं हैं, आपका अपरनाम श्रीगोविन्द हैं, आप अनन्त जगत के समग्र कारणों के मूल कारण स्वरूप हैं ॥१॥

✻ श्रीश्रीराधाकृष्णाभ्यां नमः ✻

सनातनसमो यस्य ज्यायान् श्रीमान् सनातनः ।
श्रीवल्लभोऽनुजः सोऽसौ श्रीरूपो जीवसद्गतिः ॥१॥
श्रीकृष्णरूप महिमा मम चित्ते महीयताम् ।
यस्य प्रसादाद् व्याकर्त्तु मिच्छामि ब्रह्मसंहिताम् ॥२॥

---

चतुःसनस्थ श्रीसनातन के सदृश जिन के अग्रज श्रीसनातन गोस्वामी है, श्रीबल्लभ जिनके अनुज है, वह श्रीरूपगोस्वामी ही श्रीजीव गोस्वामी का परमाश्रय है ॥१॥

श्रीकृष्ण रूप की महिमा मेरे चित्त में स्फुरित हो, जिनकी

दुर्योजनापि युक्तार्था सुविचाराद्दृषिस्मृतिः ।
विचारे तु ममात्र स्याद्दृषीणां स ऋषिर्गतिः ॥३॥
यद्यप्यध्यायशतयुक् संहिता सा तथाप्यसौ ।
अध्यायः सूत्ररूपत्वात्तस्याः सर्वाङ्गतां गतः ॥४॥
श्रीमद् भागवताद्येषु दृष्टं यन्मृष्टबुद्धिभिः ।
तदेवात्र परामृष्टं ततो हृष्टं मनो मम ॥५॥
यद् यच्छ्रीकृष्ण सन्दर्भे विस्ताराद्विनिरूपितम् ।
अत्र तत् पुनरामृश्य व्याख्यातुं स्पृश्यते मया ॥६॥

अथ श्रीमद्भागवते यदुक्तं "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति" तदेव प्रथममाह 'ईश्वर इति' अत्र कृष्ण इत्येव विशेष्यं, तन्नामएव' कृष्णावतारोत्सवेत्यादौ श्रीशुकादि महाजन प्रसिद्धया । "कृष्णाय वासुदेवाय देवकीनन्दनाये' त्यादौ सामोपनिषदि

---

प्रसन्नता से ही मैं ब्रह्म संहिताग्रन्थ की व्याख्या करने का अभिलाषी हूँ ॥२॥ उत्तम विचार से ऋषिशास्त्र, दुरूहार्थ होने पर भी समीचीन अर्थ बोधक होते हैं। समग्र ऋषियों के मूल तत्त्व द्रष्टा ऋषि ही इस कार्य में एकमात्र अवलम्बन हैं ॥३॥ यद्यपि ब्रह्म संहिता ग्रन्थ शतअध्ययात्मक हैं, तथापि, यह पञ्चम अध्याय उस शत अध्याय के सूत्र रूप होने से यह अंश ही सम्पूर्णाङ्ग ग्रन्थ है ।४।

परिमार्जित विवेकी व्यक्तिगण श्रीमद् भागवत प्रभृति ग्रन्थ में असमोर्द्ध रूप से जिस तत्त्व का अनुभव किये हैं, इस टीका ग्रन्थ में उसका ही विचार कर रहा हूँ। इस से मेरा मन अत्यन्त आनन्दित है. अर्थात् समग्र ऋषि शास्त्रों का सार सिद्धान्त प्रस्तुत ग्रन्थ में विद्यमान है ॥५॥ जिस जिस विषयों का विस्तृत विचार श्रीकृष्णसन्दर्भ में मैंने किया है, उसका पुनर्वार अनुसन्धान करके ही इस की व्याख्या करना चाहता हूँ ॥६॥

श्रीमद्भागवत में कथित है, वर्णित अवतार समूह प्रथम पुरुष श्रीनारायण के अंश कला हैं, किन्तु श्रीकृष्ण ही स्वयं भगवान् हैं, तज्जन्य उनका प्रथम कार्य द्वारा परिचायक ईश्वर" शब्द का प्रयोग

च। प्रथमप्रतीतत्वेन तन्नामवर्गाविर्भावकृता गर्गेण प्रथममुद्दिष्टत्वेन तथा यं मन्त्रमधिकृत्य सोऽयमारम्भ: तत्राग्रत: परिचितत्वेन मूलरूपत्वात् ※। तदुक्तं पद्मपुराणे प्रभासखण्डे नारदकुशध्वजसंवादे श्रीभगवदुक्तौ। "नाम्नां मुख्यतमं नाम कृष्णाख्यं मे परन्तपे"ति। अतएव ब्रह्माण्डपुराणे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे। "सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत् फलं। एकावृत्त्या तु कृष्णस्य नामैकं तत् प्रयच्छति।" इत्यत्र श्रीकृष्णस्येत्येवोक्तं यत्त्वग्रे गोविन्दनाम्ना स्तोष्यते तत् खलु कृष्णत्वेऽपि तस्य गवेन्द्रत्ववैशिष्ट्यदर्शनार्थमेव। तदेवं रूढ़िवलेन प्राधान्यात्तस्यैवेश्वर इत्यादीनि विशेषणानि अथ-

---

हुआ है। इस श्लोक में कृष्ण शब्द ही विशेष्य है, कारण वह शब्द उनका ही नाम है। श्रीशुकदेवादि अभियुक्त महाजनों ने उन के आविर्भावोत्सव के विवरण में "कृष्णावतारोत्सव" शब्दका प्रयोग किया है, सामोपनिषद् में भी उक्त है, कृष्णाय वासुदेवाय देवकीनन्दनाय। गर्ग मुनिने प्रथम प्रतीत रूप से कृष्णनाम का ही प्रयोग किया था, प्रथम उद्दिष्ट होने से तथा उनके मन्त्र में परिचायक शब्दों में अग्रणी शब्द मूलरूप से चिर परिचित शब्द कृष्ण ही है, पद्म पुराण प्रभास खण्ड में नारद कुशध्वज संवादस्थ श्रीभगवदुक्ति में व्यक्त है, हे परन्तप ! निखिल नामों में कृष्ण नाम ही मेरा मुख्यतम नाम है, अतएव ब्रह्माण्ड पुराण के श्रीकृष्णाष्टोत्तरशत नाम स्त्रोत्र में वर्णित है, पवित्र सहस्र नामों की तीनवार आवृत्ति से जो फल होता है, श्रीकृष्ण नाम की एक आवृत्ति ही उस फल को प्रदान करती है, यहाँपर कृष्ण शब्द का ही प्रयोग हुआ है, किन्तु अग्रिम ग्रन्थ में गोविन्द नाम के द्वारा जो स्तुति हुई है, उसका कारण है, कृष्ण होकर भी आप गोविन्द हैं, गोपाल लीला परायण हैं, इस वैशिष्ट्य को प्रकट करना है, अतएव कृष्ण शब्द रूढ़ि होने से ही वह शब्द प्रधान है, और उसका ही विशेषण. ईश्वर प्रभृति श्लोकस्थ शब्द समूह हैं, श्रीभगवन् नाम भगवान् के गुण एवं कर्म का प्रकाशक होते हैं, अतः गुण के द्वारा भी कृष्णशब्द का प्रयोग हुआ है, श्रीगर्ग

गुणद्वारापि तद्दृश्यते। यथाह गर्गः। "आसन् वर्णास्त्रयो ह्यस्य गृह्णतोऽनुयुगं तनूः। शुक्लो रक्तस्तथा पीत इदानीं कृष्णतां गतः। बहूनि सन्ति नामानि रूपाणि च सुतस्य ते गुणकर्म्मानुरूपाणि तान्यहं वेद नो जनाः।"

अनयोरर्थः। अस्य कृष्णत्वेन दृश्यमानस्य प्रतियुगं तनूर्नानावतारान् गृह्णतः प्रकाशयतः शुक्लादयस्त्रयो वर्णा आसन प्रकाशमवापुः। स च स च शुक्लादिरवतार इदानीं साक्षादस्यावतारसमये कृष्णताङ्गतः एतस्मिन्नेवान्तर्भूतः। अतएव कृष्णे कर्त्तृत्वात् सर्व्वोत्कर्षकत्वात् कृष्ण इति मुख्यं नाम। तस्मादस्यैव तानि रूपाणीत्याह बहूनीति। तदेवं गुणद्वारा तन्नाम्नि प्राधान्यसूचकस्य कृष्णस्य तन्नाम्नः प्राधान्ये लब्धे, "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते" इति योगवृत्तित्वेऽपि तस्य तादृशत्वं लभ्यते। न चेदं पद्यमन्यपरं। तदुपासना-

---

मुनि ने कहा–यह बालक समय समय अविर्भूत होता रहता है, वर्ण भी उस के अनुसार अनेक होते हैं, शुक्लरक्त पीतवर्ण इन अवतार के समय हो चुके हैं, सम्प्रति कृष्ण वर्ण में आप आविर्भूत हैं, आप के इस पुत्र के गुण एवं कर्म के अनुसार अनेक नाम निकर हैं, मैं उन सब नामों को जानता हूँ, अपर कोई व्यक्ति नहीं जानते हैं।

श्लोक द्वय का अर्थ इस प्रकार है, यह बालक कृष्णरूप से दृष्ट होता है, प्रत्येक युग में तनु धारण करने से इनके शुक्लादि तीन रूप प्रकाशित हो चुके हैं। सम्प्रति साक्षात् अवतार के समय में पूर्वोक्त उन उन रूपों के अवतारों का समावेश, इन सर्वावतारी मूल भूत में हुआ है, अतः श्रीकृष्ण सब के आदि कर्त्ता होने से सर्वोत्कर्षता निबन्धन उनका मुख्य नाम कृष्ण है, अतएव उनके ही अनेक रूप हैं, उसका ही विवरण बहूनि शब्द से दियागया है, गुणके द्वारा ही भगवन्नामों का प्राधान्य है, उन प्राधान्य सूचक नामों में कृष्ण नाम का प्राधान्य सर्वाधिक उपलब्ध होता है, और यौगिक अर्थ का भी सामञ्जस्य होता है, यौगिक अर्थ इस प्रकार है, कृष्ण में कृष्

तन्त्रगौतमीयतन्त्रे अष्टादशाक्षरव्याख्यायां तदेतत्तुल्यं पद्यं दृश्यते।
"कृषशब्दश्च सत्तार्थो णश्चानन्दस्वरूपकः सुखरूपो भवेदात्मा भावानन्दमयत्वतः" इति। तस्मादयमर्थः—भवन्त्यस्मात् सर्व्वेऽर्था इति भूः धात्वर्थ उच्यते भावशब्दवत्, स चात्र कर्षतेरेवार्थस्तस्यैव प्राप्तत्वात्। गौतमीये, भूशब्दस्य सत्तावाचकत्वेऽपि तद्धात्वर्थसत्तैवोच्यते। घटत्वं सत्तावाचकमित्युक्ते घटसत्तैव गम्यते न तु पटसत्ता न वा सामान्यसत्तेति। अथ निर्वृतिरानन्दस्तयोरैक्यं सामानाधिकरण्येन व्यक्तं यत् परं ब्रह्म सर्व्वतोऽपि सर्व्वस्यापि बृंहणं वस्तु तत् बृहत्तमं कृष्ण इत्यभिधीयते किन्तु कृषेराकर्षमात्रार्थत्वेन णशब्दस्य च प्रतिपाद्येनानन्देन सह सामानाधिकरण्यासम्भवाद्धेतुहेतुमतोरभेदो

---

धातु ण प्रत्यय है, कृषि-धातु भूवाचक सत्ता वाचक है, 'ण' निर्वृति वाचक है, दोनों के मिलन से ही परम ब्रह्म का वाचक शब्द कृष्ण होता है, इस यौगिक वृत्ति से भी पूर्वोक्त अर्थ का बोध होता है, यह पद्य अन्यार्थ पर है, इस प्रकार कहना ठीक नहीं है, श्रीकृष्णोपासना के प्रमुख ग्रन्थ गौतमीय तन्त्र के अष्टादशाक्षर मन्त्रव्याख्या के अवसर में उस के तुल्य पद्य है, कृष शब्द सत्तार्थक है, 'ण' आनन्द स्वरूप का बोधक है, भावानन्दमयताहेतु सुखरूप आत्म तत्त्व का प्रकाश उस से होता है। तज्जन्य उस का अर्थ इस प्रकार होगा। जिस से समस्त अर्थ होते हैं, उस को भूधात्वर्थ कहते हैं, जैसे भाव शब्द से अर्थ बोध होता है, वह सत्तार्थ कृष् धातु का ही है, कृष् शब्द से ही प्राप्त होता है, गौतमीय में उक्त है, भूशब्द सत्ता वाचक होने पर भी उस धातु की सत्ता का बोध ही होता है, जिस प्रकार 'घटत्वं सत्ता वाचकं' कहने से घट सत्ता का बोध होता है, पट सत्ता अथवा सामान्य सत्ता का बोध नहीं होता है, प्रकृति प्रत्यय मिलित होकर प्रत्ययार्थ प्रकाशित है, इस से निर्वृति शब्द का अर्थ आनन्द है, धात्वर्थ प्रत्ययार्थ की एकाधिकरण वृत्ति होने पर जो अर्थ व्यक्त होता है, वह परं ब्रह्म है, सब प्रकार से सब से बृहत् एवं सब को बृहत् कारक वस्तुब्रह्म है, वह बृहत्तम वस्तु ही कृष्ण है, किन्तु कृष धातु का

पचार: कार्य्य: । तच्चाकर्षप्राचुर्य्यार्थमायुर्घृतमितिवत् । ब्रह्मशब्दस्य तत्तदर्थत्वञ्च बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्म परमं विदुरिति विष्णु-पुराणात् । अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयतीति श्रुतेश्च ।

एवमेवोक्तं बृहद्गौतमीये । "कृषिशब्दो हि सत्तार्थो णश्चानन्दस्वरूपक: सत्तास्वानन्दयो र्योगात् चित् परं ब्रह्म चोच्यते" इति अद्वयवादिभिरपि सत्तानन्दयोरैक्यं तथा मन्तव्यं । शाब्दिकै-र्भिन्नाभिधेयत्वेन प्रतीते: । सत्ताशब्देन चात्र सर्व्वेषां सतां प्रवृत्तिहेतु र्यत् परमं सत्तदेवोच्यते । "सदेव सौम्येदमग्र आसीदि"ति श्रुते: । अभिन्नाभिधेयत्वेऽपि वृक्षस्तरुरितिवद्विशेषणविशेष्यत्वायोगादेकस्य वैयर्थ्याच्च । गौतमीयं पद्यं चैवं व्याख्येयं । पूर्व्वार्द्धे सर्व्वाकर्षण-शक्तिविशिष्ट आनन्द: कृष्ण इत्यर्थ: । उत्तरार्द्धे यस्मादेवं सर्व्वाकर्षक-सुखरूपोऽसौ तस्मादात्मा जीवश्च तत्र सुखरूपो भवेत् । तत्र हेतु:-

---

अर्थ केवल आकर्षक होने से ण शब्द प्रति पाद्य अर्थ आनन्द के सहित उसका समानाधिकरण होना असम्भव है, अत: हेतु हेतुमानका अभेदोपचार करना आवश्यक है,वह भी आकर्षक प्राचुर्य्यार्थक है, जि प्रकार आयु जनक घृत को ही "आयु" कहते हैं, ब्रह्म शब्द से उस उस अर्थ का वोध होता है, विष्णु पुराण में उक्त है–जो सव से बृहत हैं, और सव को बृहत् वना सकते हैं, उनको विज्ञगण परं ब्रह्म शब्द से जानते हैं, श्रुति भी कहती है, कैसे ब्रह्म कहे जाते हैं ? जन हित कर गुण कर्म के द्वारा वह सव से बड़े और जनहितकर निर्दुष्ट गुण कर्म की आदर्श शिक्षा द्वारा सव को बृहत् कर सकते हैं ।।

बृहद् गौतमीय में भी उस प्रकार विवरण है, 'कृषिशब्द-सत्तार्थक है, 'ण' आनन्द स्वरूप है, सत्ता एवं आनन्द के योग को चित् परं ब्रह्म कहते हैं, निर्गुण वादियों के लिए भी सत्तानन्द की एकता उस प्रकार मानना उचित है। शाब्दिक गण, भिन्न प्रवृत्ति निमित्त शब्द की एकत्र वृत्ति को सामानाधिकरण्य कहते हैं। यहाँ सत्ताशब्द से समस्त सत् पदार्थों की प्रवृत्ति हेतु परम सत्ता को ही जानना होगा। श्रुति कहती है, हे सौम्य! यह विश्व, उत्पत्ति

भाव: प्रेमा तन्मयानन्दत्वादिति । तदेवं स्वरूपगुणाभ्यां परमबृहत्तम: सर्व्वाकर्षक आनन्द: कृष्णशब्दवाच्य इति ज्ञेयं । स च शब्द: श्रीदेवकीनन्दन एव रूढ़: । अस्यैव सर्व्वानन्दकत्वं वासुदेवोपनिषदि दृष्टं । "देवकीनन्दनो निखिलमानन्दयादि"ति । आहुश्च नाम कौमुदीकारा: । कृष्णशब्दस्य तमालश्यामलत्विषि श्रीयशोदास्तनन्धये परब्रह्मणि रूढ़िरिति । ततश्चासौ शब्दो नान्यत्र संक्रमणीय: । यथाह भट्ट: "लब्धात्मिका सती रूढ़ि र्भवेद्योगापहारिणी । कल्पनीया तु लभन्ते नात्मानं योगबाधत" इति परब्रह्मत्वञ्च श्रीमद्भागवते "गूढ़ं परं ब्रह्म मनुष्यलिङ्गमिति" यन्मित्रं परमानन्दं पूर्ण ब्रह्म

---

के पूर्व सत् में ही था । अभिन्न अभिधेय होने से 'वृक्ष तरु' एकार्थ वाचक शब्द द्वयके समान विशेषण विशेष्य होना सम्भव नहीं होगा । और एक की व्यर्थता होगी ।अत:गौतमीय पद्य की व्याख्या इस प्रकार होनी चाहिये, पूर्वार्द्ध में सर्वाकर्षण शक्तिविशिष्ट आनन्द कृष्ण है, उत्तरार्द्ध में,-जब श्रीकृष्ण उस प्रकार सर्वाकर्षक सुख रूप हैं, तब आत्मा जीव भी सुख रूप हैं, उस में हेतु है कि-दोनों का जो सम्बन्ध है, भक्ति भाव, प्रेम, अनन्यममता वह स्वरूप शक्ति भूत ज्ञानानन्द के सार भूत होने से भगवदानन्दमय है, अतएव स्वरूप एवं गुण द्वारा परम बृहत्तम सर्वाकर्षक आनन्द वस्तु ही कृष्ण शब्द का अर्थ है । वह कृष्ण शब्द श्रीदेवकी नन्दन में ही रूढ़ है, वासुदेवोपनिषद् में उनका ही सर्वानन्द रूपमें वर्णन किया गया है, 'देवकीनन्दन सब को आनन्दित करें । नामकौमुदी कार ने भी कहा है, कृष्ण शब्द की मुख्यावृत्ति, तमाल श्यामल कान्ति श्री यशोदा स्तनन्धयपरब्रह्म में है, अर्थात् कृष्ण शब्द श्रवण से तत् काल यशोदानन्दन का ही बोध होता है, अतएव कृष्ण शब्द से अपर अर्थ समझना नहीं चाहिये । श्रीकुमारिल भट्टपाद ने कहा है, यथार्थ स्वरूप बोधक होने से मुख्या वृत्ति, रूढ़ि, यौगिक अर्थ का बाधक होती है, मुख्यार्थ प्राप्त होने से उस समय यौगिकार्थानुसन्धान का अवसर नहीं होता है, परब्रह्मत्व का विवरण श्रीमद् भागवत में है, कृष्ण, गूढ़ परम ब्रह्म मनुष्यलिङ्ग

सनातनं इति च। श्रीविष्णुपुराणे "यत्रावतीर्णं कृष्णाख्यं परं ब्रह्म नराकृतीति।" श्रीगीतासु च "ब्रह्मणो हि प्रतिष्ठाहमिति। श्री गोपालतापनीषु च। "योऽसौ परं ब्रह्म गोपाल" इति॥

अथ मूलमनुसरामः। यस्मादेव तादृक् कृष्णशब्दवाच्यस्तस्मादीश्वरः सर्व्ववशयिता। तदिदमुपलक्षितं वृहद्गौतमीये कृष्णशब्दस्यैवार्थान्तरेण। "अथवा कर्षयेत् सर्व्वं जगत् स्थावरजङ्गमं। कालरूपेण भगवान् तेनायं कृष्ण उच्यते" इति। कलयति नियमयति सर्व्वमिति कालशब्दार्थः। तथाच तृतीये तमुद्दिश्योद्धवस्य पूर्ण एव निर्णयः। "स्वयन्त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्त कामः वलिं हरद्भिश्चिर-लोकपालैः किरीटकोटीड़ितपादपीठ" इति। श्रीगीतासु "विष्टभ्याऽमिदं कृत्स्नमेकांशेन स्थितो जगदिति"। श्री गोपालतापन्यां। "एकोवशी सर्व्वगः कृष्ण ईड्य" इति। यस्मादेव

---

है, जिन व्रज वासियों के मित्र परमानन्द पूर्ण ब्रह्म सनातन हैं, श्री विष्णु पुराण में भी लिखित है, जहाँपर श्रीकृष्ण नामक नराकृति परब्रह्म अवतीर्ण हैं, श्रीगीता में भी उक्त है, ब्रह्म की भी मैं प्रतिष्ठा हूँ। श्रीगोपाल तापनी में उक्त है, वह गोपाल परम ब्रह्म हैं।

अनन्तर मूल श्लोक की व्याख्या करता हूँ। जब कृष्ण शब्द का वाच्य ही यशोदानन्दन है, अतः आप ईश्वर हैं, सर्व्ववशयिता हैं, गौतमीय तन्त्र में कृष्ण शब्द का अर्थ किया गया है, अथवा समस्त स्थावर जङ्गम का जो आकर्षण, भगवान् काल रूप से करते हैं, तज्जन्य उन्हें कृष्ण कहते हैं, सब को कलयति नियमयति जो नियमन काल रूप से करते हैं, काल शब्द का वह अर्थ है। भागवत के तृतीय स्कन्ध में श्रीउद्धव ने श्रीकृष्ण को लक्ष्य करके पूर्ण निर्णय किया है। श्रीकृष्ण, स्वयं असम-अनधिक हैं, अर्थात् उनका समान एवं अधिक कोई नहीं हैं, ब्रह्मा विष्णु महेश का अधीश्वर हैं, निज स्वरूप शक्ति में महीयान् होकर रहते हैं, लोकपालगण निरन्तर नम्रता से उपहार अर्पण करते रहते हैं, और निज मस्तक स्थित किरीट के अग्रभाग द्वारा निरन्तर पाद पीठ का स्पर्श करते हैं, अर्थात्

तादृगीश्वर:, तस्मात् परम:। सर्वोत्कृष्टा मा लक्ष्मी रूपा: शक्तयो यस्मिन्। तदुक्तं श्रीभागवते-रेमे रमाभिर्निजकामसंप्लुतः "इति, "नायं श्रियोऽङ्ग उ नितान्त रते: प्रसाद" इत्यादि। तत्रातिशुशुभे ताभि र्भगवान् देवकीसुत: " इति। "ताभि र्विधूत शोकाभि र्भगवान च्युतो वृत:। व्यरोचताधिकमिति च। अत्रैवाग्रे बक्ष्यते। श्रिय: कान्ता: कान्त परमपुरुष:" इति। तापन्याञ्च। कृष्णो वै परमं दैवतम्" इति। यस्मादेव तादृक् परमस्तस्मादादिश्च। तदुक्तं श्रीदशमे, श्रुत्वाजितं जरासन्धं नृपते ध्र्यायतो हरि:। आहोपायं तमेवाद्य उद्धवो यमुवाच ह इति। टीका च स्वामिपादानाम्-आद्यो हरि: श्रीकृष्ण इत्येषा, एकादशे तु तस्य श्रेष्ठत्वमाद्यत्वञ्च युगपदाह। पुरुष मृषभमाद्यं कृष्ण संज्ञं नतोऽस्मि इति। न चैतदादित्वं तदवतारापेक्ष

---

चरणारविन्दों में साष्टाङ्ग प्रणति निरन्तर करते रहते हैं, श्रीगीता में उक्त है, मैं एक अंश के द्वारा विश्व को अधिकार कर रहता हूँ। श्रीगोपाल तापनी में उक्त है,-कृष्ण, अद्वितीय, व्यापक, नियन्ता एवं प्रणम्य हैं। जब श्रीकृष्ण उस प्रकार ईश्वर हैं, अत: आप ही परम हैं, परा-सर्वोत्कृष्टा, मा-लक्ष्मीरूपा शक्ति समूह जिन में हैं, श्रीमद् भागवत में कथित है, निज काम संप्लुत, आत्माराम, कृष्ण, निज शक्ति स्वरूप लक्ष्मी वर्गके साथ क्रीड़ा करते हैं, हे अङ्ग ! लक्ष्मीगण भी उस प्रकार प्रसाद प्राप्त करने में असमर्थ रहीं, भगवान् देवकीसुत गोपीपरिषद् में अति सुशोभित हुये थे। शोकविमुक्त गोपाङ्गनाओं के द्वारा भगवान् अच्युत परिवृत होकर अधिक शोभित हुए थे। आगे और भी कहेंगे, श्रिय लक्ष्मीगण कान्ता हैं, और परम पुरुष ही कान्त हैं। तापनी में भी उक्त है, कृष्ण ही परम दैवत हैं, जब श्रीकृष्ण परम हैं, अत: आप आदि भी हैं। श्रीदशम में कहा भी है, जरासन्ध अपराजित है, यह जानकर राजा चिन्तित थे, उद्धव ने जो उपाय कहा था, उस समय आद्यहरि श्रीकृष्ण ने चिन्ता दूर करने के लिए उसे कहा। इस श्लोक की टीका में स्वामिपादने कहा है, आद्यो हरि: श्रीकृष्ण:। एकादश में श्रीकृष्ण के आद्यत्व श्रेष्ठत्व को युगपद्

किन्तु अनादि–न विद्यते आदिर्यस्य तादृश: । तापन्याञ्च, "एको वशी सर्वग: कृष्ण ईड्य इत्युक्त्वाह, नित्यो नित्यानामिति" च यस्मा देव तादृशतया आदि स्तस्मात् सर्वकारण कारणं, तथाच दशमे तं प्रति देवकीवाक्यम् । यस्यांशांशांश भागेन विश्वस्थित्यप्ययोद्भवा: भवन्ति किल विश्वात्मन् स्तं त्वाद्याहं गतिं गता" इति टीका च यस्यांश: पुरुष:, तस्यांशो'माया तस्यांशा गुणा:, तेषां भागेन परमाणु मात्रलेशेन विश्वोत्पत्त्यादयो भवन्ति । तं त्वा त्वां गतिं शरणं गतास्मीत्येषा, तथाच ब्रह्म स्तुतौ " नारायणोऽङ्गं नरभूजलायनादिति "। नराज्जातानि तत्त्वानि नाराणीतिविदुर्बुधा: । तस्य तान्ययनं पूर्वं तेन नारायण: स्मृत: " इत्यनेन लक्षितो यो नारायण: स तवाङ्गं त्वं पुनरङ्गीत्यर्थ: " श्रीगीतासु विष्टभ्याहमिदं कृत्स्न मेकांशेन स्थितो जगदिति । तदेवं कृष्ण शब्दस्य यौगिकार्थोऽपि साधित: ॥

---

कहा है, पुरुषं ऋषभं आद्यं कृष्णसंज्ञं नतोऽस्मि । यह आदित्व, अन्य अवतार की अपेक्षा से नहीं है, किन्तु आप अनादि हैं, अर्थात् आप से आदि कोई भी नहीं है । तापनी में एक वशी सर्वग कृष्ण इड्य कहकर नित्यो नित्यानां नित्य का भी नित्य हैं, अतएव आप सर्व कारणों के कारण हैं । सब के कारण–कारणार्णवशायी महत् स्रष्टा पुरुष हैं, उनका भी कारण श्रीकृष्ण हैं । श्रीदशम में श्रीकृष्ण के प्रति श्री देवकी का कथन इस प्रकार है । जिनके अंश अंश के अंश भाग से विश्व की स्थिति उत्पत्ति आदि होती हैं, हे विश्वात्मन् मैं आप की शरण ले रही हूँ । इसकी टीका इस प्रकार है,–जिन के अंश–पुरुष है, उनकी अंश माया है, उनके अंश गुण समूह है, उस के अंश मात्रा से–परमाणु लेश मात्र से विश्व की उत्पत्ति प्रभृति होती है, इस प्रकार आप हैं, आप की मैं शरण ले रही हूँ । ब्रह्मस्तुति इस प्रकार है । समस्त तत्त्वों का आश्रय जो नारायण हैं, वह भी आप का अङ्ग, अंश हैं । नरसे जो उत्पन्न है, उसे नार कहते हैं, उस के अयन–आश्रय को नारायण कहते हैं । इस से प्राप्त जो नारायण है,

ये च तच्छब्देन कृषिणाभ्यां परमानन्दमात्रं वाचयन्ति ते ऽपि ईश्वरादि विशेषणं स्तत्र स्वाभाविकी शक्ति मन्येरन्। तस्मिन्न द्वितीयत्वेन सर्वकारणत्वेन च वस्त्वन्तर शक्त्यारोपायोगात्। तथाच श्रुतिः, " आनन्दो ब्रह्मोति, को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्। आनन्दाद्धीमानिभूतानि जायन्ते। न तस्य कार्य्यं करणञ्च विद्यते, न तत् समश्चाभ्यधिकश्च दृश्यते। परास्य शक्ति विविधैवश्रुयते स्वाभाविकी ज्ञानवलक्रिया च इति। ननु स्वमते योगवृत्तो च सर्वाकर्षक परम वृहत्तमानन्दः कृष्ण इत्यभिधानात् अविग्रह एव स इत्यवगम्यते, आनन्दस्य विग्रहानवगमात्। सत्यम्। किन्त्वयं परमोऽपूर्वः पूर्वसिद्धानन्दविग्रहः' इति। सच्चिदानन्दलक्षणो यो विग्रह स्तद्रूप एवेत्यर्थः। तथाच श्रीदशमे ब्रह्मणस्तवे-त्वय्येव नित्य सुखवोधतनाविति " तापनी हयशीर्षयो

---

वह आपका अङ्ग है, आप अङ्गी हैं। श्रीगीता में कथित है, एक अंश से मैं समग्र जगत् को अधिकार कर स्थित हूँ। इस प्रकार कृष्ण शब्द के प्रकृति प्रत्यय से प्राप्त यौगिक अर्थ को दर्शायागया है।

जो लोक निर्गुण निष्क्रिय परतत्त्व में विश्वास रखते हैं, उन मत में कृष्ण शब्द एवं कृष् ण' प्रकृति प्रत्यय से आनन्द स्वरूप का ही बोध होता है, किन्तु कृष्ण शब्द के विशेषण ईश्वरादि हैं, उस को सार्थक करने के लिए कृष्ण में स्वाभाविकी शक्ति मानना पड़ेगा। परतत्त्व अद्वय हैं, और सर्वकारण हैं.अत अपर किसी वस्तु की शक्ति का आरोप कृष्णस्थ परतत्त्व में हो नहीं सकता है। श्रुति कहती हैं, आनन्द ब्रह्म है, ऐसा नहीं हो तो कौन व्यक्ति आनन्दित होगा और जीवित रहेगा। आनन्द से परिदृश्यमान भूत मात्र की उत्पत्ति होती है, उनका कार्य एवं करण भी नहीं है, उनका समान एवं अधिक कोई भी वस्तु नहीं है, उनकी निजी शक्ति अनेक हैं, उनमें प्रधान रूप से स्वाभाविकी ज्ञानवल क्रिया को कहते हैं।

निजमत में योगवृत्ति से सर्वाकर्षक परमवृहत्तमानन्द-कृष्णहैं, ऐसा होने पर आप अविग्रह ही होंगे। कारण आनन्द का विग्रह

रपि, सच्चिदानन्दरूपाय कृष्णायाक्लिष्ट कारिणे' इति। ब्रह्माण्डे च
श्रीकृष्णाष्टोत्तरशतनामस्तोत्रे, नन्दव्रजजनानन्दी सच्चिदानन्द
विग्रहः" इति। एतदुक्तं भवति। सत्त्वं खल्वव्यभिचारित्वमुच्यते
तद्रूपत्वञ्च तस्य श्रीदशमे ब्रह्मादि वाक्ये, सत्यव्रतं सत्यपरं त्रिसत्य
मित्यत्र व्यक्तम्। तथोद्यमपर्वणि च,-सत्ये प्रतिष्ठितः कृष्णः सत्यमस्मिन्
प्रतिष्ठितम्। सत्यात् सत्यञ्च गोविन्द स्तस्मात् सत्यो हि नामतः"
इति। श्रीदेवकी वाक्ये च, "नष्टेलोके द्विपरार्द्धावसाने महाभूतेष्वादि
भूतं गतेषु। व्यक्तेऽव्यक्तं काल वेगेन याते, भवानेकः शिष्यते शेष
सञ्ज्ञः। मर्त्यो मृत्युव्यालभीतः पलायन्, लोकान्, सर्वान्निर्भयं
नाध्यगच्छत्। तव पादाब्ज प्राप्य यदृच्छयाद्य, स्वस्थः शेते मृत्यु-
रस्मादपैति" इत्यादि। एकोऽसि प्रथममित्यादि। श्रीब्रह्मणं
वाक्ये "तदमितं ब्रह्माद्वयं शिष्यते" इति। श्रीगीतासु, ब्रह्मणो हि

---

नहीं होता है, कहना ठीक है। किन्तु कृष्ण, परम अपूर्व, पूर्वसिद्ध
आनन्द विग्रह है। सच्चिदानन्द स्वरूप जो विग्रह वह ही कृष्ण है।
श्रीदशम स्कन्ध के ब्रह्म स्तव में उक्त है, नित्य सुख बोधतनु रूप आप
में। तापनी हयशीर्ष ग्रन्थ में भी उक्त है-सच्चिदानन्दरूप अक्लिष्ट
कारी कृष्ण को। ब्रह्माण्ड पुराणमें श्रीकृष्ण के अष्टोत्तरशतनामस्तोत्र
है, उस में उक्त है, नन्दव्रजजनानन्दी सच्चिदानन्द विग्रहः। इस
प्रकार कहा जाता है—,सत्त्व अव्यभिचारित्व ही है, अर्थात् स्वरूप
भूत है। श्रीदशम के ब्रह्मादि वाक्य में उस प्रकार वर्णन ही है
सत्यव्रतं, सत्यपरं त्रिसत्यं" इस में परिस्फुट हुआ है। उद्यम पर्व
में उक्त है, कृष्ण सत्य में प्रतिष्ठित है, कृष्ण में ही सत्य प्रतिष्ठित है
सत्य से भी सत्य गोविन्द हैं, अतः नाम से भी आप सत्य हैं।
श्रीदेवकी देवी के वाक्य में उक्त है--द्विपरार्द्ध काल में समस्त लोक
नष्ट होने पर, आदि भूत में महाभूतों का व्यक्तों का अव्यक्त में काल
वेग से विलय होने पर शेषसंज्ञ आप ही रह जाते हैं, मरणधर्मा जन
गण मृत्युभय से भीत होकर पलायन करते रहते हैं, कहीं पर निर्भय
स्थान नहीं मिलता, आप की कृपा से आप के चरणार विन्दों को

प्रतिष्ठाहमिति। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदेच प्रथित पुरुषोत्तमः" इति। तापन्याम्। जन्म जराभ्यांभिन्नः, स्नानूरयमच्छेद्योऽयं, योऽसौ सौर्य्ये तिष्ठति, योऽसौ गोषु तिष्ठति, योऽसौ गाः पालयति, योऽसौ गोपेषु तिष्ठतीत्यादि। गोविन्दान् मृत्युर्बिभेति" इत्यादि च। तत्र पूर्वत्र सौर्य्य इति। सौरी यमुना, तददूरदेशे वृन्दावने, इत्यर्थः। अथ चिद्रूपत्वं स्व प्रकाशत्वेन पर प्रकाशकत्वम्। तच्चोक्तं श्रीदशमे ब्रह्मणा, एकस्त्व मात्मे त्यादौ स्वयं ज्योतिरिति। तापन्याम्-यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै गापयति स्म कृष्णः, तं ह देवमात्मवृत्तिप्रकाशं मुमुक्ष वैं शरणं व्रजेदिति" न चक्षुषा पश्यति रूपमस्य, यमेवैष वृणुते तेनलभ्य स्तस्यैष आत्मा वृणुते तनुं स्वामिति" श्रुत्यन्तरवत्। यथानन्दरूपत्वं सर्वांशेन निरुपाधिपरमप्रेमास्पदत्वं॥ तच्च श्रीदशमे ब्रह्मस्तवान्ते-ब्रह्मन् परोद्भवे कृष्ण इत्यादि प्रश्नोत्तरयो र्व्यक्तम्।

---

प्राप्त कर निर्भय से अवस्थान करते हैं, मृत्यु भी भगजाती है। प्रथम एक ही थे, श्रीब्रह्मा के वाक्य में भी ब्रह्माद्वय रूप में रहते हैं। श्रीगीता में ब्रह्म की मैं प्रतिष्ठा हूँ, समस्त भूतों से अतीत हूँ। नित्य पदार्थों से भी उत्तम हूँ, अतः लोक में वेद में पुरुषोत्तम नाम से ख्यात हूँ। तापनी में उक्त है, जन्म जरा से भिन्न, यह निश्चल है, अच्छेद्य है, जो सौर्य्य में अवस्थित हैं, गौओं में रहते हैं, जो गो पालन करते हैं, जो गोपों में रहते हैं। गोविन्द से मृत्यु भी भीत हैं। सौर्य्य शब्द का अर्थ इस प्रकार है --सौरी - सूर्य पुत्री यमुना, उसके समीप वर्त्ती स्थान वृन्दाबन में रहते हैं, जो स्व प्रकाश होकर पर प्रकाशक है, वह चिद्रूप है ब्रह्मा जीने श्रीदशम में कहा है, आप एक हो आत्मा ही स्वयं ज्योति हो। एवं विद्यादान किया है, वह कृष्ण है, वह देव है, आत्मवृत्ति प्रकाशक है, मुमुक्षु व्यक्ति को उनकी शरण में आना कर्त्तव्य है। नयनों से उनके रूप का दर्शन नहीं होता, कृष्ण जिसको अङ्गीकार करते हैं, वह उनको जान सकता है। श्रीकृष्ण सर्वांश में निरुपाधि परम प्रेमास्पद हैं, वह ही उनका आनन्द रूपत्व

तथाचानुभूतमानकदुन्दुभिना, विदितोऽसि भवान् साक्षात् पुरुषः प्रकृतेः परः, केवलानुभवानन्द-स्वरूपः सर्व्वबुद्धिदृगिति। आनन्दं ब्रह्मणोरूपम्'' इति श्रुत्यन्तरवत् ॥

तदेवं तस्य सच्चिदानन्दविग्रहरूपत्वे सिद्धे, विग्रह एवात्मा तथात्मैव विग्रह इति सिद्धम्। ततो जीववद्देहिहत्वं तस्य नेत्यपि सिद्धान्तितम्। यथोक्तं श्रीशुकेन। कृष्णमेनमवेहित्वमात्मानमखिलात्मनां। जगद्धिताय सोऽप्यत्र देहीवाभातिमायया'' इति। तथापि तस्य देहिवल्लीलाकृपापरवशतयैवेत्यर्थः। माया दम्भे कृपायाञ्चेति'' विश्व प्रकाशः। तदेवमस्य तथा तथालक्षण श्रीकृष्ण रूपत्वे सिद्धे चोभय लीलाभिनिविष्टत्वेन क्वचिद्वृष्णीन्द्रत्वं क्वचिद्-गोविन्दत्वञ्च दृश्यते। तथाह द्वादशे श्रीसूतः,— श्रीकृष्ण कृष्णसख वृष्णृषभावनीध्रुग्राजन्यवंश दहनानपवर्गवीर्य्य। गोविन्द गोप-

---

है। श्रीदशम में ब्रह्मस्तव के अन्त में वर्णित है, हे ब्रह्मन्! परोद्भव कृष्ण में सब व्रज वासियों की उस प्रकार प्रीति कैसे सम्भव हो? इस प्रकार प्रश्नोत्तर में सुस्पष्ट हुआ है। आनकदुन्दुभि ने भी अनुभव किया, आप विदित हैं, आप साक्षात् प्रकृत्यतीत पुरुष हैं, केवलानुभवानन्द स्वरूप-आप हैं। सर्व्वबुद्धिदृक् आप हैं। ब्रह्म का आनन्द रूप, श्रुत्यन्तर में कथित है ॥

श्रीकृष्ण का विग्रह, सच्चिदानन्द विग्रह रूप होने पर विग्रह ही उनकी आत्मा, तथा आत्मा ही विग्रह है। अतएव जीव के समान देह देही भाव उनमें नहीं है। श्रीशुकने भी कहाहै, अखिल आत्माओं की आत्मा कृष्ण को ही तुम जानना, जगत् वासियों के मङ्गल विधान के लिए सत् शिक्षा प्रदान हेतु कृपापूर्वक देही की भाँति दिखाई देते हैं। तथापि उनकी देहिवल्लीला, करुणापरवशता से ही है। माया-शब्द का अर्थ-दम्भ, कृपा, विश्वप्रकाश में है, इस से श्रीकृष्ण का स्वरूप पूर्वोक्त रूप होने से गोप लीला क्षत्रिय लीलारूप उभय लीला निविष्ट होने पर कभी वृष्णीन्द्रत्व कभी गोविन्दत्व दिखाई देते हैं। द्वादश स्कन्ध में श्रीसूत ने भी कहा है, श्रीकृष्ण!

वनिता व्रजभृत्यगीततीर्थश्रव: श्रवणमङ्गलपाहि भृत्यान्" इति। तदेवमपि स्वाभीष्ट रूपलीलापरिकरविशिष्टतया गोविन्दत्वमेव स्वाराध्यत्वेन योजयति गोविन्दइति, यथा अत्रैवाग्रे स्तोष्यते-चिन्तामणि प्रकर सद्मसु कल्पवृक्ष, इत्यादि। श्रीदशमे श्रीगोविन्दाभिषेकारम्भे सुरभीवाक्यम्–त्वं न इन्द्रोजगत्पते" इति। अभिषेकान्ते "गोविन्द' इति चाभ्यधादित्युक्त्वा तत् प्रकरणारम्भे श्रीशुकप्रार्थना, प्रीयान्न इन्द्रोगवामिति" गवां सर्वाश्रयत्वाद् गवेन्द्रत्वेनैव सर्वेन्द्रत्व सिद्धे:। न चेदं न्यूनं मन्तव्यम्। तथाहि गोसूक्तम्। गोभ्यो यज्ञा: प्रवर्त्तन्ते गोभ्यो देवा: समुत्थिता: गोभिर्वेदा: समुद्गीर्णा: षड़ङ्गपदक्रमा" इति। अस्तु तावत् परम गोलोकावतीर्णानां तासां गवामिन्द्रत्वमिति तापनीषु च ब्रह्मणा तदीयमेव स्वेनाराधनं प्रकाशितम्

---

कृष्ण सख ! ऋषभ ! जगद् वासियों के द्रोही राजन्य वंशदहनान पवर्गवीर्य्य ! गोविन्द ! गोपवनिता व्रजभृत्यगीत तीर्थश्रव: श्रवण मङ्गल ! भृत्यवर्ग की रक्षा आप करो। ऐसा होने पर भी निज अभीष्ट रूप लीला परिकर विशिष्ट श्रीगोविन्द को ही आराध्यरूप में वर्णन करते हैं, गोविन्द इति। इस ग्रन्थ के अग्रिम भाग में भी स्तव कर कहेंगे, चिन्तामणि प्रकरसद्म समूह में कल्पवृक्ष मय कानन में लीलारत हैं, श्रीदशम में—श्रीगोविन्द के अभिषेक के आरम्भ में सुरभी वाक्य इस प्रकार हैं, हे जगत्पते, तुम ही हमारे इन्द्र हो। अभिषेक के अनन्तर "गोविन्द" शब्द का ही प्रयोग किया। उक्त प्रकरण के आरम्भ में श्रीशुक की प्रार्थना यह है, गो समूह के इन्द्र, हमारे प्रति प्रसन्न होवे। निखिल पदार्थों का आश्रय गो ही है, अत: गवेन्द्र होने से सर्वेन्द्रत्व स्वाभाविक रूप से ही हुआ। यह तो अमहत्त्व की वात ही है ? इस प्रकार मानना ठीक नहीं है, गोसूक्त इस प्रकार है, यज्ञ समूह का प्रवर्त्तन गो से हुआ है, देवताओं की उत्पत्ति गो से ही हुई है, षड़ङ्गपदक्रमा वेदगण गो के द्वारा ही प्रकाशित हुई हैं। और यह तो परम गोलोक से अवतीर्ण गो समूह हैं। उन सब के इन्द्र हैं। तापनी में भी ब्रह्माने उनको ही निज

"गोविन्दं सच्चिदानन्द विग्रहं वृन्दावनसुरभूरुहतलासीनं सततं समरुद्गणोऽहं तोषयामीति" तथैव दशमे, "तद्भूरिभाग्यमिहजन्म किमप्यटव्यां यद् गोकुल" इत्यादि श्रीनन्दनन्दनत्वेनैव च तं लब्धु प्रार्थना। नौमिड्यतेऽभ्रवपुषे तड़िदम्बराय" इत्यादि। पशुपाङ्ग-जायेति। तदेवं गोविन्दशब्दस्य नाना पारमैश्वर्य्यमय्यन्याथतापि तेन नाभिमता। तथा चोक्तं, ईश्वरत्वे परमेश्वरत्वानुवाद पूर्वक तात्पर्य्यावसानतया गौतमीयतन्त्रे श्रीमद् दशाक्षरमन्त्रार्थकथने- गोपीति प्रकृतिं विद्याज्जन स्तत्त्वसमूहकः अनयोराश्रय व्याप्त्या कारणत्वेन चेश्वरः। सान्द्रानन्दं परं ज्योति र्वल्लभत्वेन च कथ्यते। अथवा गोपी प्रकृति र्जन स्तदंशमण्डलं। अनयोर्वल्लभः प्रोक्त स्वामी कृष्णाख्य ईश्वरः। कार्य्यकारणयोरीशः श्रुतिभि स्तेन गीयते। अनेक जन्मसिद्धानां गोपीनां पतिरेव वा। नन्दनन्दन इत्युक्त स्त्रैलोक्यानन्द वर्द्धनः" इति॥

---

आराधनीय रूप में प्रकाश किया है। सच्चिदानन्द विग्रह, वृन्दावन सुरभूरुह तलासीन गोविन्द की आराधना मरुद् गण के साथ मैं करता हूँ। उस प्रकार श्रीदशम में भी कहा है. मैं अपना भूरि भाग्य मानूँगा यदि गोकुल की अटवी में मेरा नगण्यजन्मलाभ हो। वहाँ श्रीनन्दनन्दन रूप में श्रीकृष्ण को प्राप्त करने की उनकी प्रार्थना रही। अभ्रवपु, विद्युत् अम्बर, पशुपाङ्गज हे स्तुत्य आप को नमस्कार। अतः गोविन्द शब्द से पारमैश्वर्य्यमय अनेक अर्थ को भी आपने ध्येय नहीं बनाया है। पूर्वोक्त ईश्वरत्व के विषय में परमेश्वरत्व का अनुवाद पूर्वक तात्पर्य्य में पर्य्यवसान करने के लिए गौतमीयतन्त्र की अष्टादशाक्षर मन्त्रव्याख्या प्रसङ्ग में कहा है, गोपी शब्द का अर्थ प्रकृति है, जन शब्द का अर्थ तत्त्व समूह उभय का आश्रय, जो व्यापन स्वभाव एवं कारण रूप में ईश्वर होते हैं, बल्लभ शब्द से सान्द्रानन्द परं ज्योतिः का बोध होता है। अथवा गोपी प्रकृति, जन तदंशमण्डल है, उभय का वल्लभ-स्वामी, कृष्ण नामक ईश्वर हैं। कार्य कारण के ईश रूप में श्रुतिगण वर्णन

प्रकृतिमिति, मायाख्यां जगत्कारणशक्तिमित्यर्थः तत्त्व समूहको महदादिरूपः । अनयोराश्रयः सान्द्रानन्दं परं ज्योतिरीश्वरो वल्लभशब्देन कथ्यते । ईश्वरत्वे हेतु र्व्यापकत्वा कारणत्वेन चेति । प्रकृतिरिति स्वरूपभूता मायातीता वैकुण्ठादौ प्रकाशमाना महालक्ष्म्याख्या शक्तिरित्यर्थः' अंशमण्डलं सङ्कर्षणादिरूपम् । अनेक जन्म सिद्धानामित्यत्र । बहूनि मे व्यतीतानि जन्मानि तवचार्जुनेति श्रीभागवद् गीतावचनामनादिजन्मपरम्परायामेव तात्पर्य्यम् । तदेवमत्रापि नन्दनन्दनत्वमेवाभिमतं श्रीगर्गेण च यथोक्तम् । "प्रागयं वसुदेवस्य क्वचिज्जातस्तवात्मज" इति । आत्मजत्वंहि, तस्य श्रीवसुदेवस्यापि मनस्याविर्भूतत्वमेवाभिमतं । आविवेशांशभागेन मन आनक दुन्दुभेरिति । श्रीदेवक्यामपि दधार सर्वात्मकमात्मभूतं काष्ठा

---

करते हैं । अनेक जन्म सिद्ध गोपीयों के पति ही हैं, नन्दनन्दन रूप में ख्यात हैं, आप त्रैलोक्यानन्दवर्द्धन कारी हैं ।

माया नामक जगत् कारण शक्ति को प्रकृति कहते हैं । महदादि को तत्त्व समूह कहते हैं, दोनों का आश्रय,—सान्द्रानन्द परं ज्योतिः ईश्वर को बल्लभ शब्द से कहते हैं । व्यापक एवं कारण होने से ही आप ईश्वर हैं । प्रकृति शब्द से स्वरूपभूता मायातीता वैकुण्ठादि में प्रकाशमाना महालक्ष्मी नामक शक्ति हैं । सङ्कर्षण को अंशमण्डल कहते हैं । अनेक जन्मसिद्धों का पति है, इस का विवरण, भगवत् गीता में उक्तहै, तुम्हारे और मेरे अनेक जन्म अतीत हो चुके हैं, इस कथन का अभिप्राय अनादि जन्मपरम्परा प्रदर्शन के लिए ही है । अत यहाँपर भी नन्दनन्दन ही अभिमत है, श्रीगर्ग ने भी वैसा ही कहा है, तुम्हारे यह पुत्र पहले कभी वसुदेव का भी पुत्र हुआ था । आत्मज होना तो वसुदेव के मन में आविर्भूत होने से ही सम्भव हुआ । आनक दुन्दुभि के मन में आविर्भूत हुए, ऐसा कथन है । श्रीदेवकी में भी आविर्भूत हुए, पूर्वदिक् जिस प्रकार चन्द्रमा को धारण करती है, उस प्रकार देवकी ने भी विश्वात्मा को धारण किया । श्रीव्रजेश्वरदम्पती में भी वैसा ही हुआ, फल को

यथानन्द करं मनस्त इत्यादेः। श्रीव्रजेश्वरयोऽपि तथासीदेव, फलेन फलकारणमनुमीयते, श्रीभगवत् प्रादुर्भावस्य पूर्वाव्यवहितकालं व्याप्य तथा तथा सर्वत्र दर्शनात्। किन्त्वात्मनि तस्याविर्भावे सत्यप्यात्मजत्वाय पितृभावमय शुद्धमहाप्रेमैव प्रयोजकम्। ब्रह्मणः सकाशाद्वराह देवस्याविर्भावेऽपि परस्परं तथा भावदर्शनाभावात्। तथा नृसिंह देव स्तम्भयोरपि, न च वक्तव्यमुदर प्रवेशे सति पुत्रत्वं स्यात्। परीक्षिद्रक्षणार्थं तन्मातुरुदरप्रविष्टे च तयोस्तादृशव्यवहाराभावात्। तस्मात् वात्सल्याभिधप्रेमैव पुत्रत्वे कारणम्। तादृशशुद्धप्रेमा तु श्रीव्रजेश्वरयोरेव श्रीवसुदेवदेवक्योस्तु परमैश्वर्य्यज्ञानं प्रतिबन्धकं, इति साधूक्तं प्रागयं वसुदेवस्येति। अथ श्रीशुकदेवेन तथैव निर्णीतं नायं सुखापो भगवान् देहिनां गोपिकासुतः' इति—आगमविद्भिरपि

---

देखकर ही कारण का अनुमान लगाया जाता है। श्रीभगवत आविर्भाव के कुछ काल पहले से ही उक्तलक्षण सर्वत्र देखने में आया किन्तु मन में आविर्भूत होनेपर भी आत्मज के लिए शुद्ध पितृभावमय शुद्धमहाप्रेम ही कारण है। ब्रह्मा के समीप से वराहदेव प्रकट होने से भी परस्पर पितापुत्र सम्बन्ध नहीं हुआ। उस प्रकार श्रीनृसिंह देव के साथ स्तम्भ का जन्य जनक भाव नहीं हुआ। उदर में प्रविष्ट होने से पुत्र होता है, ऐसा भी कहा नहीं जा सकता है, परीक्षित की रक्षा के लिए कृष्ण उत्तरा के उदर में प्रविष्ट हुये थे, किन्तु उत्तरा के साथ माता पुत्र सम्वन्ध कृष्ण का नहीं हुआ। अतएव पुत्रत्व के प्रति वात्सल्य प्रेम ही कारण है। उस प्रकार शुद्ध प्रेम तो श्रीव्रजेश्वर दम्पती में ही था। श्रीवसुदेव देवकीमें तो पारमैश्वर्य्य ज्ञान प्रतिबन्धक था। अतएव उत्तम ही कहा–पूर्वकाल में यह पुत्र वसुदेवके यहाँ भी हुआ था। श्री शुक देवने निर्णय भी किया है, यह गोपिकासुत भगवान् कृष्ण, देहियों का उस प्रकार सुखकर नहीं है। आगमज्ञा व्यक्तिगणने भी कहा है, सकललोकमङ्गलनन्दगोपतनयदेवता। अतएव श्रीमद् दशाक्षर विनियोग में भी नन्दनन्दनमय ही वर्णन है। इस विषय

सहस्रपत्रं कमलं गोकुलाख्यं महत् पदम् ।
तत् कर्णिकारं तद्धाम तदनन्तांश सम्भवम् ॥२

"सकललोकमङ्गलोनन्दगोपतनयोदेवता" इति । अतः श्रीमद्दशाक्षर विनियोगेऽपि तन्मयएव दृश्यते, इति । अथ विशेषः श्रीवैष्णव तोषण्यां नन्दस्त्वात्मज उत्पन्न" इत्यादौ द्रष्टव्यः ॥१॥

अथ तस्य तद्रूपतासाधकं नित्यं धाम प्रतिपादयति-सहस्रपत्रं कमलं, तत् कर्णिकारं, महत् पदम्, तदनन्तांश सम्भवम् गोकुलाख्यं तद्धाम अस्ति ॥२॥

अथ तस्य तद्रूपता साधकं नित्यं धाम प्रतिपादयति, सहस्र-पत्रं कमलमित्यादिना । सहस्राणि पत्राणि यत्र तत् कमलं,

में विशेष द्रष्टव्य हो तो श्रीवैष्णवतोषणी के नन्दस्त्वात्मज उत्पन्ने" प्रकरण को देखें ॥

सारार्थ—इस श्लोक में कृष्णपद ही विशेष्य है, अपरपदसमूह उस के विशेषण हैं। रूप गुण माधुर्य्यादि द्वारा सर्वाकर्षक आनन्द मयमूर्त्ति ही श्रीकृष्ण हैं, वह ही परमतत्त्व स्वयं भगवान् श्रीब्रजेन्द्र-नन्दन हैं, श्रीमद् भागवतादि आर्षशास्त्रप्रमाण द्वारा श्रीजीवगोस्वामी पाद ने निजकृत टीका में उस का निर्द्धारण किये हैं। वह सर्वशक्ति मान् परम ईश्वर हैं, उनका श्रीविग्रह, अप्राकृत हैं, नित्यचैतन्य आनन्द स्वरूप हैं, जीवादि के समान मायिक मूर्त्ति नहीं है। आप अनादि काल से ही निज नित्यलीलास्थल श्रीवृन्दावनादि में विरा-जित हैं। गोचारण लीला कौतुकी होने के कारण आप का नाम गोविन्द है। शास्त्र में अनन्त ब्रह्माण्ड के मूल कारण अनेक रूपों में निर्णीत होने पर भी निखिल शास्त्र समन्वय विचार से श्रीकृष्ण ही सर्व कारण के मूल कारण रूप में निर्णीत हुये हैं ॥१॥

अनन्तर उन के नित्य धाम का प्रति पादन करते हैं। सहस्र दल विशिष्ट कमलाकृति चिन्तामणिमय श्रीगोकुलाख्य नित्यधाम है, कर्णिकार के मध्य में। योगपीठ में उनकी नित्य स्थिति है। धामादि

भूमिश्चिन्तामणिगणमयीति वक्ष्यमाणानुसारेण चिन्तामणिमयं पद्म तद्रूपं महत् सर्वोत्कृष्टं पदंस्थानं। महतः श्रीकृष्णस्य महा भगवतो वा पदं महावैकुण्ठादिरूपमित्यर्थः, तत्तुनाना प्रकारं श्रूयते इत्याशङ्क्या प्रकार विशेषत्वेन निश्चिनोति, गोकुल मित्याख्या रूढ़ि र्यस्य तत् गो गोपावासरूप मित्यर्थ.। रूढ़ि र्योगमपहरतीति न्यायेन तस्यैव प्रतीतेः। एतदभिप्रेत्योक्तं श्रीदशमे, "भगवान् गोकुलेश्वर" इति। शीलार्थे त्वत्र वरच् प्रत्ययः। अतएव तदनुकूलत्वेनोतर ग्रन्थोऽपि व्याख्येयः। तदेव चाम्नातं गोकुलं वनवैकुण्ठमिति। तस्य श्रीकृष्णस्य धाम श्रीनन्द यशोदादिभिः सह वासयोग्यं महान्तः पुरं तैः सहवासितात्वग्रे समुद्देक्ष्यते। तस्य स्वरूपमाह तदिति। अनन्तस्य श्रीवलदेवस्यांशेन ज्योतिर्विभाग विशेषेण सम्भवः सदाविर्भावोयस्य तत् तथा तन्त्रैणैतदपि वोध्यते। अनन्तोऽंशो यस्यतस्य श्रीवलदेवस्यापि सम्भवो निवासो यत्र तदिति॥२॥

---

श्रीवलदेव के अंश से ही आविर्भूत होते हैं।

अनन्तर श्रीकृष्ण का सर्वेश्वरत्व साधक नित्य धाम का प्रतिपादन सहस्रपत्र कमल श्लोक से करते हैं। जिस कमल में सहस्र पत्र हो उस प्रकार सन्निवेश विशिष्ट है, अग्रिम ग्रन्थ में धाम की भूमि चिन्तामणि गणमयी रूप से वर्णन करेंगे, अतः पद्म चिन्तामणिमय है, महत् सर्वोत्कृष्ट स्थान है। महत श्रीकृष्ण का महाभागवत का पद महा वैकुण्ठादि रूप है, उस धाम का विवरण अनेक प्रकार है, इस आशङ्का निरसन के लिए प्रकार विशेष से निश्चय कर देते हैं, गोकुल नाम स्थान है। गोकुल संज्ञा जिस की रूढ़ि रूप में हैं, गो गोप के आवास स्थल रूप ही है। रूढ़ि वृत्ति योगिक वृत्ति का वाधक हैं, इस रीति से उक्त अर्थ का ही वोध होता है। इस अभिप्राय को प्रकट करने के लिए ही श्रीदशम में कहा है, भगवान् गोकुलेश्वर। यहाँ शीलार्थ में वरच प्रत्यय है। अतएव उक्तार्थ के आनुकूल्य से ही उत्तर ग्रन्थ की व्याख्या होनी चाहिये। कहा भी है-गोकुल वन वैकुण्ठ है। उन श्रीकृष्ण का धाम, श्रीनन्दयशोदा प्रभृति के साथ

कर्णिकारं महद् यन्त्रं षट्कोणं वज्रकीलकम्।
षड़ङ्ग–षट्पदीस्थानं प्रकृत्या पुरुषेण च।

सर्वमन्त्रगण सेवितस्य श्रीमदष्टादशाक्षरमन्त्रराजस्य मुख्यपीठं वर्णयति–षट्कोणं वज्रकीलकं षड़ङ्गषट्पदीस्थानं प्रकृत्यापुरुषेण च प्रेमानन्दमहानन्दरसेनावस्थितं यत् ज्योतिरूपेण मनुना कामवीजेन सङ्गतं कर्णिकारं महद्यन्त्रमस्ति ।।३।।

सर्वगणसेवितस्य श्रीमष्टादशाक्षरमन्त्रराजस्य बहु पीठस्य मुख्यपीठमिदमित्याह, कर्णिकारमिति द्वयेन। महद्यन्त्रमिति। यत् प्रकृतिरेव सर्वत्र यन्त्रत्वेन पूजार्थं लिख्यते इत्यर्थः। यन्त्रमेव दर्शयति, षट्कोणा अभ्यन्तरे यस्य तत्। वज्रकीलकं कर्णिकारे वीजरूपहीरककीलकशोभितम् ।। यन्त्रे चकारोपलक्षिता।

योग्य महान्तः पुर है, उन सब के साथ ही श्रीकृष्ण वहाँपर विराजते हैं, इस को अग्रिम ग्रन्थ में कहेंगे। उस का स्वरूप वर्णन करते हैं। अनन्त श्रीवलदेव के अंश से ज्योति विभाग विशेष रूप से सदा आविर्भूत है, एवं श्रीवलदेव का भी निवास स्थल वहाँपर है ।।२।।

सर्वमन्त्र गण सेवित श्रीमदष्टादशाक्षर मन्त्र राज के अनेक पीठ हैं, उस में जो मुख्य पीठ है, उसका वर्णन करते हैं, "कर्णिकार" दो श्लोकों के द्वारा! महद् यन्त्रं–सर्वत्र पूजा के निमित्त जिस यन्त्र का लिखन होता है वह ही महद् यन्त्र है। यन्त्र का स्वरूप कहतेहैं, मध्यमें षट् त्रिकोण है,त्रिकोण द्वय के सन्निवेश से षट् कोण होता है, बज्र कीलक है, अर्थात् कर्णिका में वीजरूप हीरक कीलक शोभित है, च कार के द्वारा जानना होगा कि–चतुर्थी विभक्ति युक्त कृष्ण शब्द कीलरूप में शोभित है, षट् कोण होने का प्रयोजन व्यक्त करते हैं, छ अङ्ग जिस के हैं वह षट् पदी हैं, श्रीमदष्टारशाक्षरी की संज्ञा है, षट् पदी, उसका स्थान। प्रकृति—मन्त्र का स्वरूप, वह स्वयं ही श्रीकृष्ण हैं, आप स्वयं ही कारण हैं। ऋष्यादि स्मरण

प्रेमानन्दमहानन्दरसेनावस्थितं हि यत् ।
ज्योतीरूपेणमनुना कामवीजेन सङ्गतम् ॥३॥

---

चतुर्थ्यन्ता चतुरक्षरी कीलरूपा ज्ञेया । षट् कोणत्वे प्रयोजनमाह। षट् अङ्गानियस्या सा षट् पदी श्रीमदष्टादशाक्षरी तस्याः स्थानम्। प्रकृतिर्मन्त्रस्य स्वरूपं स्वयमेव श्रीकृष्णः, कारणरूपत्वात् । तच्चोक्त ऋष्यादि स्मरणे–कृष्णः प्रकृतिरिति । पुरुषश्च स एव तदधिष्ठातृ देवतारूपः, ताभ्यामवस्थितमधिष्ठितम् । स हि मन्त्रे चतुर्धाप्रतीयते। मन्त्रस्य कारणरूपत्वेन, अधिष्ठातृ देवतारूपत्वेन, वर्णं समुदाय रूपत्वेन, आराध्यरूपत्वेन च । तत्र कारण रूपत्वेन अधिष्ठातृदेवता रूपत्वेनात्रोच्यते । आराध्यरूपत्वेन प्रागुक्तः । ईश्वरः परमः कृष्ण इति। वर्णरूपत्वेनाग्रत उद्धरिष्यते । कामः कृष्णाय इति। यथोक्तं हयशीर्षपञ्चरात्रे, वाच्यत्वं वाचकत्वञ्च देवतामन्त्रयोरिह। अभेदेनोच्यते ब्रह्मन् तत्त्वविद्भिर्विचारतः" इति । गोपाल तापनी

---

में कहा गया है, कृष्ण ही प्रकृति हैं, पुरुष भी श्रीकृष्ण हैं, वह ही अधिष्ठातृ देवतारूप हैं, उभय रूप से ही अधिष्ठित हैं। श्रीकृष्ण, मन्त्र में चार प्रकार में प्रतीत होते हैं, मन्त्र के कारण रूप में, अधिष्ठातृ देवता रूपमें वर्णसमुदाय रूप में, आराध्य रूप में। उस में से कारण रूप–एवं अधिष्ठातृरूप का वर्णन इस स्थल में करते हैं। आराध्य रूप का वर्णन पहले हुआ है, ईश्वरः परमः कृष्णः शब्द से। वर्णरूप में श्रीकृष्ण हैं, उसका समन्वय आगे करेंगे। कामः कृष्णाय' इस स्थल में। हयशीर्ष पञ्चरात्र में उक्त है, हे ब्रह्मन् ! तत्त्वविद्गण विचार पूर्वक निर्णय करते हैं, कि–देवतामन्त्र के साथ शब्द अर्थ का सम्बन्ध वाच्य वाचक होने पर भी अभेद से ही कहा जाता है। गोपाल तापनी श्रुति में उक्त है, जिस प्रकार एक वायु शरीर में प्रविष्ट होकर पाँच रूप धारण करते हैं, उस प्रकार कृष्ण जगत् वासियों के हित के निमित्त शब्द के द्वारा पञ्च-पद होते हैं। अतएव प्रेम रूप जो आनन्द चिन्मयरस, उस का जो

श्रुतिषु, "वायु र्यथैको भुवनं प्रविष्टो जन्ये जन्ये पञ्चरूपो बभूव। कृष्ण स्तथैकोऽपि जगद्धितार्थं शब्देनासौ पञ्चपदो विभाति। इति।

क्वचिद् दुर्गाया अधिष्ठातृत्वं शक्तिशक्तिमतोरभेदविवक्षया यथा च वृहद् गौतमीये, राधा दुर्गा, शिवा दुर्गा, लक्ष्मी दुर्गा प्रकीर्त्तिता। गोपाल विष्णु पूजायामाद्यन्ता नतुमध्यमा अतएवोक्तं गौतमीयकल्पे, यः कृष्णः सैवदुर्गास्याद् या दुर्गा कृष्ण एव स अनयो रन्तरादर्शी संसारान्नो विमुच्यते। इत्यादि। अतः स्वयमेव श्रीकृष्ण स्तत्र स्वरूपशक्तिरूपेण दुर्गा नामेति। तस्मान्नेयं मायांशभूता दुर्गातिगम्यते। निरुक्तिश्चात्र कृच्छ्रेण दुर्गाराधनादि वहुप्रयासेन गम्यते ज्ञायते इति। तथाच श्रीनारदपञ्चरात्रे श्रुतिविद्या सम्वादे "जानात्येका पराकान्तं सैव दुर्गा तदात्मिका। या परा परमाशक्ति र्महाविष्णु स्वरूपिणी। यस्या विज्ञानमात्रेण पराणां परमात्मनः।

---

विशेष परिपाक अर्थात् गाढ़ अवस्था, वह भी इस धाम में विराजित है, ज्योति रूप अर्थात् स्व प्रकाश कामवीज के सहित उक्त मन्त्रराज उक्त यन्त्र में अवस्थित हैं।

मन्त्राधिष्ठातृ देवतारूप में दुर्गा का जो उल्लेख वहाँपर मिलता, वह शक्ति शक्तिमान् में अभेद कथन के अभिप्राय से है। वृहद् गौतमीय में कथित है, राधा दुर्गा, शिवादुर्गा, लक्ष्मीदुर्गा प्रकीर्त्तिता। गोपाल विष्णु की पूजा में आद्यन्त ग्रहण हैं, मध्यम दुर्गा का नहीं। अतएव गौतमीय कल्प में कहा है—जो कृष्ण है वह ही दुर्गा है, जो दुर्गा है, वह ही कृष्ण है उभय में भेददर्शी व्यक्ति संसार से मुक्त नहीं होता है, अतएव स्वयं ही श्रीकृष्ण स्वरूप शक्ति रूप में दुर्गा नाम धारण करते हैं। अत यह मायांश भूता दुर्गा नहीं है। दुर्गा शब्द की निरुक्ति भी इस प्रकार है, कृच्छ्रसे गुर्वाराधनादि प्रयास से जानी जाती है, वह दुर्गा है। श्रीनारद पञ्चरात्र के श्रुति विद्यासम्वाद में उक्त है; एका परा शक्ति कान्त कृष्ण को जानती है, वह तदात्मिका दुर्गा है, जो परा परमाशक्ति, महाविष्णु स्वरूपिणी है, जिस को जानने से ही परतत्त्व के भी परमात्मा देव देवकी प्राप्ति

तत् किञ्जल्कं तदंशानां तत्पत्राणि श्रियामपि ॥४

मुहूर्त्तादेव देवस्य प्राप्तिर्भवति नान्यथा। एकेयं प्रेम सर्वस्व स्वभावा श्रीकुलेश्वरी। अनया सुलभोज्ञेय आदि देवोऽखिलेश्वरः। भक्ति भंजन सम्पत्ति भंजते प्रकृतिः प्रियम्। ज्ञायते अत्यन्त दुःखेन सेयं प्रकृतिरात्मनः। दुर्गेति गीयते सद्भिरखण्ड रसवल्लभा। अस्या आर्वारिका शक्ति महामायाखिलेश्वरी। यया मुग्धं जगत् सर्वं सर्वं देहाभिमानिनः" इति च। तथा च सम्मोहन तन्त्रे जयां प्रति श्री-दुर्गावचनम् यन्नाम्नानाम्नी दुर्गाहं गुणै र्गुणवती ह्यहं। यद् वैभवा महालक्ष्मी राधा नित्यापराद्वयेति। किञ्च प्रेमरूपा ये आनन्द महानन्दरसास्तत् परिपाकभेदास्तदात्मकेन, तथा ज्योतीरूपेण स्व प्रकाशकेन मनुना मन्त्ररूपेन काम बीजेन सङ्गतमिति मूलान्तर्गतत्वे ऽपि कामबीजस्य पृथगुक्तिः कुत्रचन स्वातन्त्र्यापेक्षया ॥३॥

तदेवं तद्धामोक्त्वा तदावरणान्याह तस्य कर्णिकारूप धाम्नः

स्वल्प समय में होती है, अन्यथा नहीं होती है। वह शक्ति प्रेम सर्वस्व स्वभावा श्रीकुलेश्वरी श्रीराधा हैं। इनसे ही आदि देव अखिलेश्वर सुलभ हैं। वह भक्ति, है, भजन सम्पत्ति है, प्रकृति होकर प्रिय का भजन करती है। अत्यन्त दुःख से परिज्ञात होती है, अतः सज्जनगण उन्हें अखण्ड रस वल्लभा दुर्गा कहते हैं। इन की आवरिका शक्ति, महामाया अखिलेश्वरी है, जिन्होंने देहाभि-मानियों को मुग्ध किया है॥ सम्मोहन तन्त्र में जया के प्रति श्री दुर्गा का कथन इस प्रकार है, जिनके नाम और गुण से मैं दुर्गा नाम से ख्यात हूँ। और गुणवती भी हूँ। उस वैभववती महालक्ष्मी राधा नित्या पराद्वया है। और भी प्रेमरूप जो आनन्द महारस है, उसका परिपाक भेद समूहात्मक रूप से ही स्थित है, तथा ज्योतिरूप स्व प्रकाशरूप कामबीजात्मक मन्त्र से युक्त है। मूलान्तर्गत होने पर भी पृथक् कथन,-कामबीजका,स्वातन्त्र्य की अपेक्षा से हुआहै ।३।

श्रीकृष्ण धाम का वर्णन के अनन्तर उस के आवरण का

किञ्जल्कं किञ्जल्का: शिखरावलिवलितप्राचीरपङ्क्तय: तच्च तदंशानां परिकराणां धामेत्यर्थ:। तत् पत्राणि कमलस्य पत्राणि श्रियां तत् प्रेयसीनां गोपीरूपाणां श्रीराधादीनामुपवन रूपाणि धामानीत्यर्थ: ।४

तदेवं तद्धामोक्त्वा तदावरणान्याह तदित्यर्द्धेन । तस्य कर्णिका रूप धाम्न: किजल्कं किञ्जल्का: शिखरावलिवलित प्राचीर-पङ्क्तयइत्यर्थ: । तच्च तदंशाना तस्मिन्नंशोदायो विद्यते येषां परम प्रेमभाजां सजातीयानां धामेत्यर्थ: । गोकुलाख्यमित्युक्तिरेव । तेषां सजातीयत्वञ्चोक्तं श्रीबादरायणिना, एवं ककुद्मिनं हत्वा स्तूयमान: स्वजातिभि:, विवेश गोष्ठं सबलो गोपीनां नयनोत्सव: "इति कंस-वधान्ते श्रीव्रजराजं प्रति स्वयं भगवता—"ज्ञातीन् वो द्रष्टुमेष्यामो विधाय सुहृदां सुखमिति । अतएव कमलस्य पत्राणि श्रियां तत् प्रेयसीनां गोपीरूपाणां श्रीराधादीनामुपवन रूपाणि धामानीत्यर्थ: । गोपीरूपत्वञ्चासां मन्त्रस्य तन्नाम्नालिङ्गितत्वात् राधादित्वञ्च"

---

वर्णन अर्द्ध श्लोक से करते हैं। कर्णिका रूप धाम का किञ्जल्क अर्थात् शिखरावलियुक्त प्राचीर पङ्क्ति समूह हैं। वह परम प्रेम पात्र सजातीय ज्ञातीवर्गका आवासस्थान है, कारण–गोकुल शब्द से ही कथन हुआ, वे सब श्रीकृष्ण के सजातीय हैं. उसका विवरण प्रदान श्रीबादरायणि ने कियाहै, इस प्रकार ककुद्मि को मारकर स्वजातीय व्यक्तियों से प्रशंसित होकर गोपियों के नयनोत्सव श्रीकृष्ण श्री-बलराम के सहित गोष्ठ में प्रविष्ट हुए। कंस वध के पश्चात् श्री व्रजराज के प्रति स्वयं भगवान् ने कहा है, सुहृदों को सुखीकरके आप सब ज्ञातीवर्ग को देखने को मैं आऊँगा । अतएव कमल के पत्र समूह श्रीकृष्ण के प्रेयसी रूप गोपीगण श्रीराधा प्रभृतियों के उप वन रूप धाम समूह हैं। उनके प्रेयसीवर्ग गोपी हैं। उसका विवरण गोपीशब्द युक्त उनके मन्त्र से मिलता है। राधादिका विवरण बृहद् गौतमीय से मिलता है, देवी, कृष्णमयी राधिका, परदेवता, सर्व लक्ष्मीमयी सर्वकान्ति, सम्मोहिनी परा है। मत्स्य पुराण में उक्त है, वाराणसी में विशालाक्षी, पुरुषोत्तम में विमला, द्वारावती में

देवीकृष्णमयी प्रोक्ता राधिका परदेवता सर्व लक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परा" इति बृहद् गौतमीयात्" वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे। रुक्मिणी द्वारवत्यान्तु राधा वृन्दावने वने" इति मत्स्यपुराणात्। राधयामाधवो देवो माधवेनैव राधिका। विभ्राजन्ते जनष्वा" इति। ऋक् परिशिष्टश्रुतौ च। अत्र विशेष जिज्ञासायां कृष्णार्चन दीपिका द्रष्टव्या। तत्र पत्राणामुच्छ्रित प्रान्तानां वर्त्माण्यग्रिम सन्धिषु तु गोष्ठानि ज्ञेयानि। अखण्डकमलस्य गोकुलत्वात् तथैव गोकुल समावेशाच्च गोष्ठं तथैव, यत्तु स्थानान्तरे वचनमस्ति— "सहस्रारं पद्मं दलततिषु देवीभिरभितः परीतो गोसङ्घैरपि निखिल किञ्जल्कमिलितैः। वराटे यस्यास्ति स्वयमखिलशक्त्या प्रकटित-प्रभावः सत्यः श्रीपरमपुरुषस्तं किल भजे" इति पद्मवीजकोषे" इत्यर्थः। तत्र गोसंख्यैरिति तु पाठः समञ्जसः। गोसंख्याश्च गोपाः" इति। गोपे गोपालगोसंख्यगोधुगाभीरवल्लभा" इत्यमरः। वराट इति, वराटानां अभ्यन्तरे कर्णिका मध्यदेश" इत्यर्थः। अखिल शक्त्या प्रकटितः प्रभावः येन सः परम पुरुषः श्रीकृष्ण इत्यर्थः ॥४॥

---

रुक्मिणी वृन्दावन में श्रीराधा हैं। ऋक् परिशिष्ट ग्रन्थ में उक्त है, माधव देव राधिका के साथ, राधिका माधव के सहित शोभित हैं। इस विषय में विशेष जिज्ञासा हो तो कृष्णार्चन दीपिका ग्रन्थ को देखें। उन्नत प्रान्त पत्र समूह के सन्धिस्थल के प्रथम में पथ समूह है, एवं अग्रभाग में गोष्ठ, अर्थात् धेनु वृन्द के वासस्थान हैं, एक अखण्ड कमल ही गोकुल है, कमल के समान ही गोकुल का समावेश है, अतएव गोष्ठ की स्थिति भी उस प्रकार ही है। स्थानान्तर में जो वचन है-सहस्र पत्र युक्त कमल है, दल समूह में देवी समूह के बासस्थान है, चतुर्दिक में गोष्ठ है, पद्मकोष वीज में स्वयं श्रीपुरुषोत्तम अखिल शक्ति वर्ग के साथ विराजित है, उनका मैं भजन करता हूँ वहाँ गो संख्यैः" ऐसापाठ होना ठीक है। गो संख्य शब्द से गोपों का वोध होता है। अमरकोषकार के मत में गोपे गोपाल गो संख्य गोधुगाभीर वल्लभाः" है। वराट शब्द से वराटों के अभ्यन्तर

चतुरस्रं तत्परितः श्वेतद्वीपाख्यमद्भुतम् ।
चतुरस्रं चतुर्मूर्त्तेश्चतुर्द्धाम चतुष्कृतम् ॥
चतुर्भिः पुरुषार्थैश्च चतुर्भिर्हेतुभिर्वृतम् ।
शूलै र्दशभिरानद्धमूर्द्धाधो दिग् विदिक्ष्वपि ॥

---

अथ गोकुलावरणान्याह चतुरस्रमिति चतुर्भिः श्लोकैः। तत् तस्य गोकुलस्य वहिः परितः सर्वतः चतुरस्रं चतुष्कोणात्मकं अद्भुतं श्वेत द्वीपाख्यं स्थानमस्ति। कथम्भूतम् तत्–चतुर्मूर्त्तेश्चतुष्कृतम् चतुरस्रं चतुर्द्धाम वर्त्तते। चतुर्भिः पुरुषार्थैश्च चतुर्भिः हेतुभिर्वृतम् ऊर्द्धाधो दिग्विदिक्ष्वपि शूलैः दशभि रानद्धम्। अष्टभि र्निधिभिः अष्टभिः सिद्धिभिस्तथा युक्तम्, दशभिर्दिक्पालैर्मनुरूपैश्च परितोवृतम् श्यामैः गौरैश्च रक्तैश्च शुक्लैश्च पार्षदर्षभैः ताभिः अद्भुताभिः शक्तिभिः समन्ततः शोभितम् ॥५॥

अथ गोकुलावरणान्याह चतुरस्रमिति चतुर्भिः। तस्य गोकुलस्य वहिः सर्वतश्चतुरस्रं चतुष्कोणात्मकं स्थानंश्वेतद्वीपाख्यं, तदेतदुपलक्षणं गोलोकाख्यञ्चेत्यर्थः। यद्यपि गोकुले श्वेतद्वीपत्वम–

---

में कर्णिका मध्य देश में जानना होगा, जिन्होंने अखिल शक्ति के द्वारा निज प्रभाव को प्रकटित किए हैं, वह परम पुरुष श्रीकृष्ण हैं।४

अनन्तर गोकुल के आवरण का वर्णन चार श्लोकों से करते हैं। उस गोकुल के बाहर चतुष्कोणात्मक श्वेतद्वीप नामक एक अद्भुत धाम है, यहाँ केवल श्वेतद्वीपका ही उल्लेख है, किन्तु उस से गोलोक नाम को भी जानना होगा, वस्तुत गोकुल की श्वेत द्वीप संज्ञा है, उस के मध्य में ही यह सब स्थान है, तथापि एकविशेष नाम द्वारा कथन से उस नाम से मध्यवर्त्ति स्थान का भी वोध होता है। अन्तर्मण्डल की संज्ञा वृन्दावन है, श्वेत द्वीप, गोलोक गोकुल, वृन्दावन, व्रज प्रभृति शब्द का प्रयोग विभिन्न तात्पर्य होता से रहता है। सायम्भुवागम में वर्णित है, विशुद्धात्मा वहाँपर इन सब का ध्यान क्रम पूर्वक करे, कहकर उस के मध्य में नाना वृक्ष विहङ्गम

अष्टभि र्निधिभि र्युक्तमष्टभिः सिद्धिभि स्तथा।
मनुरूपैश्च दशभिर्दिकपालैः परितोवृतम् ॥
श्यामै र्गौरैश्च रक्तैश्च शुक्लैश्च पार्षदर्षभैः।
शोभितं शक्तिभिस्ताभि रद्भुताभिः समन्ततः ॥५॥

---

स्त्येव तदवान्तर भूमिमयत्वात्, तथापि विशेषनाम्नोक्तत्वात्तैनैव तत् प्रतीयते " इति तथोक्तम् ॥ किन्तु चतुरस्रेऽप्यन्तर्मण्डलं श्रीवृन्दावनाख्यं ज्ञेयम्। तथा च सायम्भुवागमे-ध्यायेत्तत्रविशुद्धात्मा इदं सर्व क्रमेण च ॥ इत्यादिकमुक्त्वा तन्मध्ये, वृन्दावनं कुसुमितं नाना वृक्षविहङ्गमम् संस्मरेत्'' इत्युक्तम्। तथाच वृहद् वामने श्रुतीनां प्रार्थना पूर्वकानि पद्यानि-आनन्दमात्रमिति यद्वदन्तिहि पुराविदः। तद्रूपं दर्शयास्माकं यदिदेयो वरोहि नः। श्रुत्वैतद् दर्शयामास स्व लोकं प्रकृतेः परम्। केवलानुभवानन्दमात्रमक्षरमद्वयम्। यत्र वृन्दावनं नाम वनं काम दुघैः द्रुमैः। मनोरमं निकुञ्जाढयं सर्वर्तु सुख संयुतम्'' ॥ इत्यादि तच्च चतुरस्रं, चतुर्मूर्त्तेश्चतुर्व्यूहस्य वासुदेवादि चतुष्टयस्य, चतुष्ककं चतुर्द्धा विभक्तं चतुर्द्धाम। किन्तु देव लीलत्वात् तदुपरि व्योमयानस्था एव ज्ञेयाः हेतुभिः। तत् पुरुषार्थ-

---

युक्त कुसुमित वृन्दावन का स्मरण करे। इस प्रकार कहा है। वृहद् वामन पुराण में श्रुतियों के प्रार्थना पूर्वक पद्य समूह, इस प्रकार है, मुनिगण जिनको आनन्द मात्र ही कहते हैं, हमे यदि वर देना हो तो उस रूप का दर्शन करवाओ। शुनकर प्रकृति से अतीत निज लोक का दर्शन उन्होंने कराया, जो केवल अनुभवानन्द मात्र है, अक्षर, अद्वय स्वरूप है, जहाँ वृन्दावन नामक वन हैं, कल्प द्रूमों से पूर्ण है, मनोरमनिकुञ्जयुक्त है, और सकल ऋतुओं में सुखकर है। वह चतुष्कोण है, और चतुष्कोण में चतुर्व्यूह वासुदेव सङ्कर्षण प्रद्युम्न अनिरुद्ध के पृथक् पृथक् चार धाम हैं, किन्तु देवलील होने से उपर में व्योमयान में रहते हैं। हेतुओं के साथ, पुरुषार्थ साधनों के साथ

साधनैः । मनुरूपैः स्व स्वमन्त्रात्मकैः दिक् पालैः–इन्द्रादिभिः । श्यामादयः चत्वारो वेदाः, तैरित्यर्थः । कृष्णञ्च तत्रच्छन्दोभिः स्तूयमानं सुविस्मिताः '' इति दशमात् । शक्तिभिः–विमलादिभिः । तदेवं गोलोक नामा अयं लोकः श्रीभागवते साधितः ।

तथा श्रीदशमे,—नन्दस्त्वतीन्द्रियं दृष्ट्वा लोकपालमहोदयम् कृष्णे च सन्नतिं तेषां ज्ञातिभ्यो विस्मितोऽब्रवीत् । ते चोत्सुक्यधियो राजन् मत्वा गोपास्तमीश्वरम् । अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः । इति स्वानां स भगवान् विज्ञायाखिलदृक् स्वयम् । सङ्कल्प सिद्धये तेषां कृपयैतदचिन्तयत् जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः उच्चावचासुगतिषु न वेद स्वां गतिं भ्रमम् । इति सञ्चिन्त्य भगवान् महाकारुणिको विभुः । दर्शयामास स्वं लोकं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्मज्योतिः सनातनम् । यद्धिपश्यन्तिमुनयो

---

धर्म अर्थ, काम, मोक्ष के सहित विराजित हैं, निज निज मन्त्रात्मक इन्द्रादि दशदिक् पालों से शोभित हैं, एवं श्याम, गौर, रक्त, शुक्ल वर्ण विशिष्ट वेदात्मक पार्षद श्रेष्ठों के द्वारा परिवृत हैं। वेदगण की भी मूर्त्ति हैं, श्रीदशम में वर्णित है, वेदों के द्वारा श्रीकृष्ण स्तुत हुये थे। विमला प्रभृति शक्तियों से युक्त हैं, इस प्रकार गोलोक नामक स्थान का वर्णन श्रीमद् भागवत में है।

श्रीदशम में वर्णित है-श्रीनन्दमहाराजने वरुण लोक का वृत्तान्त ज्ञाति परिजनों के समीप में कहे थे, वरुण लोक में कृष्णको देखकर लोक पालगण ससम्भ्रम उपस्थित होकर उनकी नतिस्तुति किये, इस अलौकिक आश्चर्य घटना को देखकर नन्द महाराज विस्मित हो गये थे, पश्चात् वरुण लोक से मुक्त होकर जब व्रज में आये तो स्वजनों के पास उस वृत्तान्त को कहेविना आप से रहा नहीं गया, परिजन वर्ग भी उसे सुनकर अति उत्सुक हो गये, और अपनेसे विजातीय शक्ति सम्पन्न जानकर कृष्ण को ईश्वर मानने लगे। मृत्यु के बाद अपनी अपनी गति क्या होगी उसे जानने के लिए सब उत्सुक हो गये, और कृष्ण को ईश्वर मानकर पुछने लगे। भगवान् कृष्ण

गुणापाये समाहिता:। ते तु ब्रह्महृदं नीता मग्ना: कृष्णेन चोद्धृता:। ददृशु र्ब्रह्मणोलोकं यत्राक्रूरोऽध्यगात् पुरा॥ नन्दादयस्तु तं दृष्ट्वा परमानन्द निर्वृता:। कृष्णञ्च तत्र छन्दोभि: स्तूयमानं सुविस्मिता इति। अतीन्द्रियमदृष्टपूर्वं स्वगतिं स्वधाम। सूक्ष्मां दुर्ज्ञेयां उपाधास्यत् उपाधास्यति। अस्मान् प्रापयिष्यतीत्यर्थ:। इति संकल्पितवन्त इति शेष:। जनोऽसौ व्रजवासी मम स्वजन:। सालोक्य सार्ष्टि" इत्यादि पद्ये 'जना' इतिवदुभयत्राप्यन्यजनत्वमप्रस्तुतमिति। व्रजजनस्य तु तदीयस्वजनतमत्वम् तेन स्वयमेव विभावितं, "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत् परिग्रहम्। गोपाये स्वात्म योगेन सोऽयं मे व्रत आहित:॥ इत्यनेन। स एतस्मिन् प्रापञ्चिके

---

भी निज जनों की परलोक विषयिणी उत्सुकता जानकर उन सबके सन्तोषार्थ स्वयं चिन्ता करने लगे। चिन्ता इस प्रकार रही, लोक मनुष्य शरीर प्राप्तकर कर्मानुरूप उच्चनीच शरीर में भ्रमन् कर सुख दुःख की उपलब्धि करते हैं, और अपनी स्थिति को नहीं जानते हैं, इस प्रकार चिन्ताकर भगवान् महाकारुणिक विभु कृष्णने गोपों को प्रकृत्यतीत निज लोक का दर्शन करावाया। जिसको सत्य, ज्ञान, अनन्त ब्रह्म ज्योति सनातन रूप से कहते हैं, मुनिगण प्रकृत्यतीत होकर समाहित बुद्धि से जिस को देखते हैं। श्रीकृष्ण व्रजवासियों को ब्रह्महृद में लेगये, और डूबकी लगवाकर उठालिये उन्होंने डूबकर ब्रह्मलोक को देखा, अक्रूर ने भी पहले वहाँपर ही ब्रह्मलोक को देखा था। नन्दादि गोपगण ब्रह्म लोक को देख कर परमानन्द में विभोर हो गए, और वहाँ कृष्ण को भी उन्होंने देखा, जो वेद गण के द्वारा स्तुत हो रहे थे। उस से वे सब आश्चर्य चकित हो गए। पहले कभी आप लोकोंने नहीं देखा था, वह अतीन्द्रिय था, निज निज गति के धाम को उन्होने निजनेत्रों से देखा सूक्ष्मा दुर्ज्ञेय स्थान, तदनुसार ही कृष्ण ने उन सब को दिखलाया, वह जन" इस से व्रजवासी जन कृष्ण के निज जन हैं। सालोक्य सार्ष्टिसामीप्य सारूप्यैकत्वमप्युत दीयमानं न गृह्णन्ति विना मत्सेवनं

लोके अविद्याभिः या उच्चावचा देवतिर्य्यगादि रूपा गतयस्तासु स्वां गतिं भ्रमन् तन्मिश्रतयाभिव्यक्तेः तन्निर्विशेषतया जानन्, तामेव स्वां गतिं भवेदेत्यर्थः मदीय लौकिक लीला वेशेन ज्ञानांश तिरोधानादिति भावः। इति नन्दादयो गोपाः कृष्णरामकथां मुदा। कुर्वन्तो रममाणाश्च नाविदन् भववेदनामिति श्रीदशमोक्तेरविद्याकाम कर्मणां तत्रासामर्थ्यात्। गोपानां स्वं लोकं—गोलोकमिति। अर्थात्तान् प्रत्येव सन्दर्शयामास। तमसः प्रकृतेः परं स्वरूपशक्त्याभि

---

जनाः" यह जिस प्रकार जन शब्द से निज जन का ही बोध होता है, वैसा ही प्रस्तुत स्थल में जन शब्द भी निज जन का बोधक है, अन्य जन का ग्रहण प्रासङ्गिक नहीं है। व्रज जन तो श्रीकृष्ण के स्वजन तम हैं, इस को उन्होंने स्वयं ही कहा है, अतः यह गोष्ठ मेरीशरण में है, मैं अपने बल वीर्य से इसे रक्षा करूँगा, यह मेरा व्रत है। यह कथन श्रीकृष्ण का है। इस प्रापञ्चिक लोक में निज जन गण अवतीर्ण होने पर देव तिर्य्यगादि अविद्या के द्वारा रचित उच्चावच गति को अनुभव कर उस से मिश्रित रूप से ही आपने को मानकर विभोर हो गये थे और निज स्वरूप को भूल ही गये। श्रीकृष्ण के लीलावेश से अनुसन्धान रूप ज्ञानांश तिरोहित होकर रहा। श्री दशम में उक्त है, नन्दादि गोपगण परमानन्द से कृष्ण राम की कथा को गाते गाते समय अतिवाहित करते थे, और भव वेदना का अनु भव भी उनका नहीं था, इस से अविद्या काम कर्म का प्रभाव उनपर नहीं था। अविद्या का प्रभाव प्राकृत जीव पर होता है, जो कृष्ण वहिर्मुख है, परिकरगण के उपर नहीं होता है, गोपों को जो लोक कृष्णने दिखलाया था वह गोलोक था। उसका दर्शन ही उन्होंने करवाया। वह लोक प्रकृति से अतीत है, स्वरूप शक्ति से ही अभिव्यक्त होता है, अतएव वह लोक सच्चिदानन्द रूप से कथित होता है, अतएव कहा है, सत्यमिति। अनन्तर श्रीवृन्दावन के किस स्थान में उस प्रकार दर्शन हुआ, कहते हैं,—ब्रह्महृद-अक्रूर तीर्थ को कहते हैं, कृष्ण ही व्रजवासियों को वहाँपर ले गए थे, और

व्यक्तत्वात्। अतएव सच्चिदानन्दरूप एवासौ लोक इत्याह सत्य मिति। अथ श्रीवृन्दावने तादृशदर्शनं कतमदेशस्थितानां तेषां इत्यत: आह तेत्विति। ब्रह्मह्रदं अक्रूर तीर्थं कृष्णेन नीता, पुनश्च तेनैव मग्ना: मज्जिता: पुनश्च तस्मात्तेनैवोद्धृता:—उद्धृत्य पुन: स्वस्थानं प्रापिता: सन्तो, ब्रह्मण: परमबृहत्तमस्य तस्यैव लोकं गोलोकाख्यं ददृशु:। मूर्द्धभि: सत्यलोकस्तु, ब्रह्मलोक: सनातन' इति द्वितीये। वैकुण्ठान्तरस्यापि तत्तयाख्याते:। कोऽसौ ब्रह्मह्रद: ? तत्राह—यत्रेति।

पुरेत्यतत् प्रसङ्गाद् भाविकाल इत्यर्थ:। पुरा पुराणे निकटे प्रबन्धातीत भाविषु' इति कोषकारा: " सेयञ्च परिपाटी तत्तीर्थ महिमानं लक्ष्यमेव विधातुमिति भाव:। तत्रस्वांगतिमिति तदीयता निर्देशो, गोपानां स्वलोकमिति षष्ठी स्वशब्दयो निर्देश:। कृष्णमिति साक्षात् निर्देशच वैकुण्ठान्तरं व्यवच्छिद्य श्रीगोलोकमेव स्थापित-वानिति। तथाच हरिवंशे शक्रवचनम्। स्वर्गादूर्द्ध ब्रह्मलोक ब्रह्मर्षि गण सेवित:। तत्र सोमगतिश्चैव ज्योतिषाञ्च महात्मनाम्।

---

उन्होंने ही जल में निमज्जित किया, और उन्होंने उठवाया, उठवा कर पुनर्वार निजस्थान में रखा। ब्रह्मलोकका अर्थ परम बृहत्तम का लोक—गोलोक नामक स्थान को उन्होंने देखा द्वितीय स्कन्ध में उक्त है, उपरिस्थित सत्यलोक है, ब्रह्मलोक तो सनातन है। वैकुण्ठान्तर को भी ब्रह्म लोक शब्द से कहते हैं। वह ब्रह्मह्रद कौन-है—कहते हैं, अक्रूरदृष्ट ब्रह्मह्रद है।

उक्त प्रसङ्ग के भविकाल में, उस के पश्चात् ही अक्रूर का प्रसङ्ग हुआ था, पूर्व में नहीं, पुरा शब्द के अर्थ—पुराण, निकट, में प्रवन्धातीत भाविकाल होते हैं। यह परिपाटी उस तीर्थ की महिमा को प्रचार करने के उद्देश्य से ही हुई है। स्वां गतिं-निर्देश से उन सब की गति को जाननी होगी, तदीयता का निर्देश हुआ है, गोपों का निज लोक, यहाँ गोप शब्द के सामीप्य के द्वारा उस अर्थका ही निर्देश हुआ है। कृष्ण को प्रयोग से साक्षात् निर्देश हुआ हैं, अत:

तस्योपरि गवां लोकः साध्यास्तं पालयन्ति हि। स हि सर्वगतः कृष्ण महाकाशगतो महान्। उपर्य्युपरि तत्रापि गतिस्तव तपोमयी। यां न विद्म वयं सर्वे पृच्छन्तोऽपि पितामहम्। गतिः शमदमाढ्यानां स्वर्गः सुकृतः कर्मणां। ब्रह्मे तपसि युक्तानां ब्रह्मलोकः परागतिः। गवामेव हि यो लोकः दुरारोहा हि सा गतिः। स तु लोकः त्वया कृष्ण सीदमानः कृतात्मना धृतो धृतिमता वीर निघ्नतोपद्रवान् गवाम्॥ इति। तत्रापातप्रतीतार्थान्तरे स्वर्गादूर्द्ध ब्रह्मणो लोक इत्ययुक्तं स्यात् लोकत्रयमतिक्रम्योक्तेः। तत्र सोमगतिश्चैवेत्यपि न सम्भवति चन्द्रस्यान्येषामपि ज्योतिषां ध्रुवलोकाधस्तादेव गतेः। तत्र साध्यास्तं पालयन्तीत्यपि नोपपद्यते। देवयोनिरूपाणां तेषां स्वर्गलोकस्यापि पालनमसम्भवम्। किमुत तदुपरि गोलोकस्य। तथा तस्य लोकस्य

---

वैकुण्ठान्तर का निरास कर श्रीगोलोक ही स्थापित हुआहै। हरिवंश पुराण में शक्रकेवचन से ज्ञात होता है कि-स्वर्ग के उपरिभाग में ब्रह्मर्षिगण सेवित ब्रह्मलोक है, वहाँ सोम की और प्रभावशाली महात्माओं की गति है, उसके उपरितन देश में गोलोक है, उस का पालन साध्य जनगण करते हैं, हे कृष्ण! वह लोक सर्वगत है, महाकाशगत है, महान् है, उस के भी उपरितन देश में तुम्हारी तपोमयी गति है, पितामह को पुछकर भी हमसव उस को जानने में असमर्थ रहें, पुण्य कर्म परायण शमदमादियुक्त व्यक्तियों के लिए स्वर्गलोक है, और ब्रह्म में तपस्या में निरत जनगण के लिये ब्रह्मलोक ही परा गति है। गोलोक नामक स्थान दुरारोह है, हे कृष्ण हे वीर! उस लोक विपन्न होनेपर कृतात्मा धृतिमान् आपने उसको धारण किया, और गोओं की विपत्ति को हटाया। इस प्रकार आपात प्रतीति से स्वर्ग के उपरि भाग में ब्रह्मलोक का वोध होना अयुक्त होगा। लोकत्रय को अतिक्रम करके ही उसका वर्णन होता है, वहाँ सोम की गति है, वह भी सम्भव नहीं है, चन्द्र की एवं अन्यान्य ग्रहनक्षत्रों की गति ध्रुवलोक के नीचे ही है। साध्यगण उस का पालन करते हैं, कहना भी युक्ति युक्त नहीं होगा। देवशरीर वाले के लिए स्वर्ग

सुरभिलोकत्वे सति सर्वगत इत्यनुपपन्नं स्यात्। श्रीभगवद्विग्रह लोकयोरचिन्त्यशक्तित्वेन विभुत्वं घटते न पुनरस्येति। अतएव सर्वातीतत्वात् तत्रापि तवगतिरित्यपि शब्दो विस्मये प्रयुक्तः। यां न विद्मो वयं सर्वे" इत्यादिकञ्चोक्तम्। तस्मात् प्राकृतगोलोकादन्य एवासौ गोलोक इति सिद्धम्। तथाच मोक्ष धर्मे नारायणीयोपाख्याने श्रीभगवद्वाक्यं, एवं वहुविधै रूपैश्चरामीह वसुन्धराम्। ब्रह्मलोकञ्च कौन्तेय गोलोकञ्च सनातनमिति ! तस्मादयमर्थः स्वर्ग शब्देन, भू र्लोकः कल्पितः पद्भ्यां भुव र्लोकस्तुनाभितः। स्वर्लोकः कल्पितो मूर्द्धर्ना इति वा लोककल्पना ॥ इति द्वितीयानुसारेण स्वर्लोक मारभ्य सत्यलोकपर्य्यन्तं लोकपञ्चकमुच्यते तस्मादूर्द्धमुपरि ब्रह्म-लोकः ब्रह्मात्मको लोकः ब्रह्मलोकः सच्चिदानन्द रूपत्वात् ब्रह्मणो-भगवतो लोक इति वा। मूर्द्धभिः सत्यलोकस्तु–ब्रह्मलोकः सनातनः इति द्वितीयात्। तथा च टीका– ब्रह्मलोको वैकुण्ठाख्यः" सनातनो नित्यः नतु सृज्यः प्रपञ्चान्तर्वर्त्तीत्येषा। श्रुतिश्च एष ब्रह्मलोकः,

---

का पालन ही असम्भव है, उस के उपरि भाग में स्थित गोलोक का पालन उन से कैसे होगा। तथा उक्त लोक सुरभी लोक नाम से प्रसिद्ध है, वह सर्वगत है, यह कहना भी अयुक्त होगा। श्रीभगवद् विग्रह के समान श्रीभगवल्लोक का भी व्यापकत्व अचिन्त्य शक्ति से होता है। किन्तु अपर लोक का वैसा होना सम्भव नहीं हैं। अतएव सर्वातीत हेतु वहाँपर भी तुम्हारी गति है, रहाँ अतिविस्मय को सुचित करने के लिए अपि शब्द का प्रयोग हुआ है। जिस को हम सव नहीं जानते हैं, यह कहा है। अतएव प्राकृत गोलोक से वह गोलोक अन्य ही है, मोक्षधर्मीय नारायणीयोपाख्यान में श्रीभगवद् वाक्य–भी इस प्रकार है। हे कौन्तेय ! इस प्रकार वहुविध रूप के द्वारा मैं वसुन्धरा में विचरण करता हूँ और ब्रह्म लोक गोलोक में भी विचरण करता हूँ। अतः,––उसका अर्थ इस प्रकार हैं,––स्वर्ग शब्द से पदद्वय द्वारा भूर्लोक भुवर्लोक नाभि से स्वर्गलोक मस्तक से रचित हुए, यह लोकत्रय की स्थिति है, द्वितीयस्कन्ध के

एष:-आत्मलोक:, इति, सच ब्रह्मर्षिगणसेवित:' ब्रह्माणि, मूर्त्तिमन्तो वेदा:, ऋषय: श्रीनारदादय:, गणाश्च, श्रीगरुड़विष्वक्-सेनादय:, तै:सेवित:। एवं नित्यश्रितानुवत्या तत्गमनाधिकारिण आह। तत्र ब्रह्मलोके उमया सह वर्त्तते इति सोम: शिवस्तस्य गति: स्व धर्मनिष्ठ: शतजन्मभि: पुमान्, विरिञ्चतामेति तत: परं हि माम् अव्याकृतं भागवतोऽथ वैष्णवं, पदं यथाहं विबुधा: कलात्यये इति चतुर्थेरुद्रगीतात:। सोमेति सुपां सुलुगित्यादिना षष्ठ्या लुक्छान्दस:। तत्र उत्तरत्रापि गतिरित्यस्यान्वय:। ज्योति ब्रह्म तदकात्मा भावानां मुक्तानामित्यर्थ:। नतु तादृशामपि सर्वेषां किन्तु महात्मनां महाशयानां मोक्षानादरतया भजतां श्रीसनकादितुल्यानामित्यर्थ:। मुक्तानामपि सिद्धानां नारायणपरायण:। सुदुर्ल्लभ: प्रशान्तात्मा

---

अनुसार स्वर्ग लोक से ब्रह्मलोक पर्य्यन्त पाँच लोकों की कल्पना है, उसके उपर ब्रह्मलोक है। ब्रह्मात्मक लोक ही ब्रह्मलोक है, सच्चिदा नन्दरूपता के कारण ब्रह्म भगवान् का धाम है। मस्तक के द्वारा सत्यलोक तो ब्रह्म लोक सनातन है, यह वर्णन द्वितीय स्कन्ध में है। इसकी टीका ब्रह्मलोक वैकुण्ठ नामक सनातन नित्य है, नतु सृज्य है, सृज्य तो प्रपञ्च के अन्तर्वर्त्ती है। श्रुति भी कहती है-यह ब्रह्म लोक, यह आत्मलोक है, वह ब्रह्मर्षिगण सेवित हैं। ब्रह्माणि मूर्त्तिमान् वेद समूह, ऋषिगण-श्रीनारद प्रभृति मुनिगण, गण-श्रीगरुड़ विष्वकसेन प्रभृति हैं, उनसब के द्वारा सेवित हैं। इसप्रकार नित्याश्रितों का विवरण कहकर, वहाँपर जाने वाले का अधिकार कहते हैं। उस ब्रह्मलोक में उमा के साथ रहते हैं, वह सोम हैं, अर्थात् शिव हैं, उनकी गति है, साधक शतजन्म स्वधर्मनिष्ठ होने पर ब्रह्म लोक गमन करता है, उस के बाद मुझ को शिव को प्राप्त करता है, इस के पश्चात् वैष्णवगण भगवल्लोक को प्राप्त करते हैं, जिस प्रकार प्रलय होने से हमसब देवता भगवल्लोक को प्राप्त करते हैं। यह विवरण चतुर्थ स्कन्ध के रुद्रगीत में हैं। सोम शब्द से षष्ठी विभक्ति का लोप सुपांसु लुगिति छान्दस सूत्र से हुआ है। उस

कोटिष्वपि महामुने ।।" इतिषष्ठात् ।। योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः । इति गीताभ्यश्च । तेष्वेव महत्वपर्य्यवसानात् । तस्य ब्रह्मलोकस्योपरि गवां लोकः श्रीगोलोक इत्यर्थः ।।

तञ्च गोलोकं साध्याः प्रापञ्चिकदेवानां प्रसाधनीयामूलरूपा नित्यतदीयदेवगणाः पालयन्ति दिक्पालतया वर्त्तन्ते. ते ह नाकं महिमानं सचन्तो यत्र पूर्वे साध्याः सन्ति देवाः, इति श्रुतेः । तत्र पूर्वे ये च साध्या विश्वेदेवाः सनातनाः । ते ह नाकं महिमानः सचन्तः शुभदर्शनाः" ।। इति महावैकुण्ठ वर्णने पाद्मोत्तर खण्डाच्च । यद्वा, तद् भूरिभाग्यमिह जन्म किमप्यटव्यां यद् गोकुलेऽपि" इति श्री ब्रह्मस्तवानुसारेण तद्विधपरमभक्तानामपि साध्याः तादृशसिद्धि प्राप्तये प्रसाधनीयाः श्रीगोपीप्रभृतयस्तं पालयन्ति । तदेवं सर्वोपरि

---

में उत्तरोत्तर गति होती है, इस प्रकार अन्वय है । ज्योतिः ! शब्द से ब्रह्म का बोध होता है, उनमें एकात्मभावापन्न मुक्तगण की गति होती है, किन्तु सवमुक्तों की नहीं होती है, महात्मा महाशय गण की गति होती है, और जो मुक्त मुक्ति के प्रति अनादर कर श्रीभगवान् का भजन करते हैं, जैसो श्रीसनकादि हैं, उनकी गति होती है । सिद्ध मुक्त गणों में नारायण परायण प्रशान्तात्मा अति दुर्लभ हैं । यह षष्ठ स्कन्ध का कथन है । श्रीगीता में उक्त है, योगियों के मध्य में समर्पित आत्मा जो श्रद्धापूर्वक मेरा भजन करता है, वह युक्ततम होता है, यह मेरा मत है । महत् शब्द का पर्यवसान उन सव में होता है । उस ब्रह्म लोक के उपरिभाग में जो लोक है, वह गोओं का लोक श्रीगोलोक है ।

उस गोलोक का पालन साध्यगण करते हैं, जो प्रापञ्चिक देव गणों के मूलरूप होते हैं, वे सव नित्य श्रीकृष्ण के ही देवगण होते हैं, और वहाँ दिक्पालरूप में रहते हैं । श्रुति में भी अनुरूप शब्द से ही वर्णित है, तेहनाकं महिमानः सचन्तो यत्र पूर्वे साध्याः सन्तिदेवाः । तत्र पूर्वे येच साध्या विश्वे देवाः सनातनाः । तेह नाकं

गतत्वेऽपि, हि प्रसिद्धो, स श्रीगोलोकः सर्वगतः श्रीनारायण इव प्रापञ्चिकाप्रापञ्चिक वस्तु व्यापकः। कैश्चित् क्रममुक्ति व्यवस्थया तथा प्राप्यमानोऽप्यसौ द्वितीयस्कन्धवर्णित कमलासन दृष्ट वैकुण्ठवत् श्रीव्रजवासिभिरपि यस्माद् दृष्ट इति भावः। अतएव महान् भगवद्रूप एव, महान्तं विभुमात्मानम्" इति श्रुतेः। तत्र हेतुः, महाकाशः परमव्योमाख्यं ब्रह्म विशेषणलाभात्, आकाशस्तल्लिङ्गादिति न्यायसिद्धेश्च, तद्गतब्रह्माकारोदयानन्तरमेव वैकुण्ठप्राप्तेः, यथा अजामिलस्य तदेवमुपर्य्युपरि सर्वोपर्य्यपि विराजमाने तत्र श्रीगोलोके ऽपि तव गतिः, श्रीगोविन्दरूपेण क्रीड़ा वर्त्तत इत्यर्थः। अतएव सा गतिः साधारणी न भवति, किन्तु तपोमयी। तपोऽत्रानवच्छिन्नैश्वर्य्यम् सहस्रनामभाष्येऽपि, परमं यो महत्तप:" इत्यत्र तत्र व्याख्यातम्। स तपोऽतप्यत" इति परमेश्वरविषयक श्रुतेः। ऐश्वर्य्यं प्राकाशयदिति तत्रार्थः। अतएव ब्रह्मादिदुर्वितर्क्यत्वमाह यामिति

---

महिमानः सचन्तः शुभदर्शनाः।" पद्मोत्तर खण्ड के महावैकुण्ठ वर्णन में उक्त है। यद्वा, उस को मैं भूरि भाग्य समझुंगा, यदि मेरा जन्म इस वृन्दाटवी में नगण्य वृक्ष रूप में हो, गोकुल में हो, और गोकुल वासियों के चरणरेणु मुझे मिले। इस प्रकार ब्रह्मस्तव के अनुसार, उस प्रकार परम भक्त भी फल प्राप्ति के लिए उनके परिकर श्रीगोपगोपी प्रभृति की प्रसन्नता को चाहते हैं। वह गोलोक सर्वोपरिस्थित होने पर भी, यह प्रसिद्ध भी है, तथापि वह श्रीगोलोक सर्वगत श्रीनारायण के समान प्रापञ्चिक अप्रापञ्चिक वस्तु व्यापक है। क्रममुक्तिव्यवस्था में किसी को ब्रह्मलोक वैकुण्ठ लोक का दर्शन कराया जाता है, द्वितीय स्कन्ध में वर्णित ब्रह्माजी ने भी वैकुण्ठ लोक का दर्शन किया, उस प्रकार श्री व्रजवासियों ने भी ऐश्वर्य्य प्रधान धाम का दर्शन किया। अतएव वह धाम महान् है, भगवद्रूप है, महान्तं विभुमात्मानम्" शब्द से श्रुति भी कहती है, उस में हेतु है—महाकाश परव्योम, नामक ब्रह्म का विशेषण है, ब्रह्म सूत्र भी आकाशस्तल्लिङ्गात् है। अजामिलका भी तदगत

अधुना तस्य गोलोक इत्याख्या वीजमभिव्यञ्जयति गतिरिति। ब्राह्म्ये ब्रह्मलोकप्रापके, तपसि–श्रीविष्णुविषयकमनः प्रणिधाने युक्तानां यतचित्तानां तत्प्रेमभक्तानामपीत्यर्थः। "यस्य ज्ञानमयं तपः" इति श्रुतेः। ब्रह्मलोकः वैकुण्ठलोकः, पराप्रकृत्यतीता गवां ब्रजवासिमात्राणां, मोचयन् ब्रजगवांदिनतापम्" इति दशमात् अत्रैव निघ्नतोपद्रवं गवामिति। स्वतस्तद्भावभावितानाञ्च साधनावशादित्यर्थः, अतस्तद्भावस्य दुर्लभत्वात् दूरारोहा। तदेवं गोलोकं वर्णयित्वा तस्य गोकुलेन सहाभेदमाह–सत्विति।

स तु स एव लीलोधृतो रक्षितः श्रीगोवर्द्धनोद्धरणेनेति,एवमेव

---

ब्रह्माकारोदय के अनन्तर ही वैकुण्ठ की प्राप्ति हुई। अतः समस्त लोकों के उपर विराजमान धाम गोलोक में भी तुम्हारी गति–श्रीगोविन्द रूप में क्रीड़ा होती रहती है। वह क्रीड़ा साधारणी नहीं है, किन्तु तपोमयी है, तपः शब्द से अनवच्छिन्न ऐश्वर्य्य को जानना होगा। सहस्रनामभाष्य के परमं यो महत्तपः" इस स्थल में तपः शब्द का वैसा ही अर्थ किया गया है। सतपोऽतप्यत यह परमेश्वर विषयक श्रुति है, उस का अर्थ—ऐश्वर्य्य को प्रकट किए थे। अतएव ब्रह्मादि के लिए भी वह धाम दुर्वितर्क्य है। अधुना–गोलोक शब्द का अर्थ है। जिस मनसे ब्रह्म लोक की प्राप्ति होती है, उस प्रकार एकाग्र मन से श्रीविष्णु की आराधना करने पर संयतचित्त वाले को प्रेममयभक्त कहते हैं, लोक उस को जान सकते हैं। श्रुति भी कहतीहै यस्य ज्ञानमयं तपः'। ब्रह्मलोक–वैकुण्ठलोक, परा–प्रकृति से अतीता, गवां–ब्रजवासिमात्रों के क्लेश दूर करते हैं, श्रीदशम में कहा है—ब्रज वासियों के विरह ताप को विदूरित करते हुए क्रीड़ा करते हैं। यहाँपर ही उक्त है, गोओं के उपद्रव को शान्त करने के लिए आपने क्रीड़ा की। उन सव की प्रीति स्वभाविकी है, उनके आनुगत्य से तद्भाव भावित होनेपर साधक में वह प्रीति होती है, उस को साधन प्राप्त कहते हैं। अतः वह भाव दुर्लभ होने से वह गति दुरारोहा है, इस प्रकार गोलोक का वर्णन करने के पश्चात् उस के साथ

मोक्षधर्मे-श्रीनारायणीयोपाख्याने श्रीभगवद्वाक्यं—एवं वहुविधै रूपै श्चरामीह वसुन्धराम्। ब्रह्मलोकञ्च कौन्तेय गोलोकञ्च सनातनम्' इति। तथाच मृत्यञ्जय तन्त्रे--"एकदा सान्तरीक्षाच्च वैकुण्ठं स्वेच्छया भुवि। गोकुलत्वेन संस्थाप्य गोपीमयमहोत्सवा। भक्तिरूपा सतां भक्तिमुत्पादितवतीभृशम्॥ एवं नारदपञ्चरात्रे विजयाख्याने, तत् सर्वोपरि गोलोके तत्र लोकोपरि स्वयम्। विहरेत् परमानन्दी गोविन्दोऽतुलनायकः इति। तथा ऋक्षु चायमेव प्रदिष्टः "तां वां वास्तून्युश्मसि गमध्ये, यत्र गावो भूरि शृङ्गा अयासः। तत्राह तदुरुगायस्य वृष्णः, परमं पदमवभाति भूरि" इति, व्याख्या- तञ्च तां तानि वां युवयोः कृष्णरामयो र्वास्तूनि लीलास्थानानि गमध्ये प्राप्तुं उश्मसि, कामयामहे, तानि किं विशिष्टानि ? यत्र येषु भूरि शृङ्ग्यो गावः वहुशुभलक्षणा इति वा। अयासः शुभाः, अयः शुभावहो विधिरित्यमरः। देवास इतिवत् जसन्तं पदम्। अत्र

---

गोकुल का जो अभेद है, उसे कहते हैं सतु इति॥

गोवर्द्धन पर्वत धारण के द्वारा उस की रक्षा आपने की। उक्त प्रकार कथन मोक्ष धर्मस्थ श्रीनारायणीयोपाख्यान में है, श्री भगवद् वाक्य इस प्रकार है,-इस प्रकार अनेक रूपों से पृथिवी में विचरण करता हूँ। हे कौन्तेय! ब्रह्मलोक गोलोक सनातन है, मृत्युञ्जय तन्त्र में उक्त है, एक समय स्वेच्छा से अन्तरीक्ष से वैकुण्ठ को गोकुल रूप में पृथिवी में स्थापन कर गोपीमय महोत्सव को सम्पन्न किया था, वह भक्तिरूप है, और सज्जनों को भक्ति प्रदाता है। इस प्रकार श्रीनारदपञ्चरात्र में विजयाख्यान है। सव धाम के उपर गोलोक है, उस में अतुल नायक परमानन्दो गोविन्द निरन्तर विहार करते हैं। श्रुति में भी उसका वर्णन है, तां वां वास्तुन्युश्मसिगमध्ये, यत्र गावो भूरिशृङ्गाअयासः तत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" इसकी व्याख्या, तां वे सव, वां-कृष्णराम के वास्तूनि, लीलास्थान समूह, गमध्ये प्राप्तुं उश्मसि, प्राप्त करना चाहता हूँ, वे सव किस प्रकार हैं, यह बड़ी

**एवं ज्योतिर्मयो देवः सदानन्दंपरात्परः ।**
**आत्मारामस्य तस्यास्ति प्रकृत्या न समागमः ॥६॥**

---

भूमो तल्लोके वेदे च प्रसिद्धं श्रीगोलोकाख्यं--उरुगायस्य स्वयं भगवतः तच्चरणारविन्दस्य परमं प्रपञ्चातीतं पदं स्थानं भूरि बहुधा अव भातीत्याह--वेद इति, यजुःषु माध्यन्दिनीये स्तूयते धामान्युश्मसीति विष्णोः परमं पदं अवभातीति भूरीति चात्र प्रकारान्तरं पठन्ति। शेषंसमानम् ॥५॥

एवं ज्योतिर्मयः परात्परः सदानन्दं देवोवर्त्तते ।
तस्य आत्मारामस्य प्रकृत्या समागमः नास्ति ॥६॥

अथ मूलव्याख्यामनुसरामः। विराट् तदन्तर्यामिनोरभेद विवक्षया पुरुषसूक्तादावेकपुरुषत्वं यथा निरूपितं, तथा गोलोक तदधिष्ठात्रोरप्याह--एवमिति। देवो गोलोकस्तदधिष्ठातृ श्रीगोविन्दरूपः, सदानन्दमिति—तत् स्वरूपमित्यर्थः । नपुंसकत्वं—विज्ञान मानन्दं ब्रह्म'' इति श्रुतेः। आत्मारामस्य अन्यनिरपेक्षस्य प्रकृत्या

---

**श्रृङ्गवाली गैया हैं। भूरिशब्द धर्मिपर होने पर भूम शब्द से महिष्ठ का बोध होता है। किन्तु अनेक प्रकार का बोध नहीं होता है। यूथ की दृष्टि से उस प्रकार कहा गया है—शुभलक्षणां अनेक गो हैं, अयासः शुभा। अयः शुभावहो विधिरित्यमरः" देवास के समान जसन्त पद है, यहाँ भूमण्डल में वैकुण्ठ में वेद में प्रसिद्ध जो गोलोक है। वह उरुगाय स्वयं भगवान् के प्रपञ्चातीत स्थान अनेक प्रकार से प्रकाशित है। माध्यन्दिनीय में स्तुति है, श्रीविष्णु के धाम की कामना करता हूँ जो परम पद में अनेक प्रकार से विलसित है। प्रकारान्तर से पूर्वोक्त कथन ही है ॥५॥**

**अनन्तर मूल की व्याख्या करते हैं। श्रीगोलोक के अधिष्ठाता श्रीगोविन्द स्वरूप का वर्णन करते हैं, आप चैतन्य स्वरूप, विचित्र लीलारूप क्रीड़ाशील, सच्चिदानन्दविग्रह एवं परात्पर हैं, अर्थात् सर्वोपरि तत्त्व हैं, पुरुषसूक्त में जिसप्रकार विराड् एवं उस के**

मायया रममाणस्य न वियोगस्तया सह ।
आत्मना रमया रेमे त्यक्तकालं सिसृक्षया ।
नियतिः सा रमा देवी तत्प्रिया तद्वशम्बदा ॥७॥

---

मायया न समागमः । यथोक्तं द्वितीये—न यत्र माया किमुतापरे हरे रनुव्रता यत्र सुरा सुरार्चिताः ॥६॥

अथ प्रपञ्चात्मन स्तदंशस्य पुरुषस्य तु न तादृशत्वमित्याह—मायया रममाणस्य तस्य पुरुषस्य तया मायया सह सिसृक्षया त्यक्त कालं रेमे । अथच स आत्मना रमया रेमे, सा रमादेवी नियतिः, तत् प्रिया तद्वशम्बदा भवति ॥७॥

---

अन्तर्यामी के साथ अभेद कथन के उद्देश्य से जिस प्रकार एक पुरुष का निरूपण हुआ है, उस प्रकार गोलोक एवं उसके अधिष्ठातृ देवता का वर्णन एक रूप से करते हैं। देव शब्द का अर्थ गोलोक एवं उसके अधिष्ठातृ देवता श्रीगोविन्द हैं। समूह पद से ही उभय पक्ष में अर्थ प्रकाशित होता है । सदानन्दं सच्चिदानन्द स्वरूप है, नपुंसक लिङ्ग का प्रयोग-विज्ञानमानन्दं ब्रह्म" इस श्रुति के अनुसरण से हुआ है। आप आत्माराम हैं, अतः वहिरङ्गामाया के साथ उनका संसर्ग नहीं है, द्वितीय स्कन्ध में उक्त है, जहाँपर माया का प्रभाव नहीं है, समस्त तत्त्व ही श्रीहरि के अनुगत हैं ॥६॥

प्रपञ्चात्मा पुरुष, उनका अंश होनेपर भी लीला उस प्रकार नहीं है, उनके अंश पुरुष इस विश्व के अधिष्ठाता हैं, प्राकृत प्रलय होने पर भी उन में उनकालय नहीं होता है, जिन के अंश के अंश के अंश भागसे सृष्टि स्थिति प्रभृति होती रहती है, जीव के समान ईश्वर भी माया से लिप्त होकर अनीश्वर होगें ? उत्तर में कहते हैं। नहीं। माया के द्वारा वहिर्भाग में सेवित होते हैं। अभ्यन्तर में रमा अर्थात् स्वरूप शक्ति के द्वारा ही सेवित होते हैं, तृतीय के ब्रह्म स्तव से ज्ञात होता है कि—प्रपन्न वरद प्रभु आत्मशक्ति रमा नामक निज शक्ति से सेवित होते हैं। प्रथम स्कन्ध में अर्जुन

अथ प्रपञ्चात्मन स्तदंशस्य पुरुषस्य तु न तादृशत्वमित्याह-माययेति। प्राकृत प्रलयेऽपि तस्मिंस्तस्यालयात् यस्यांशांशांश भागेनेत्यादेः। ननु तर्हि जीववत्तल्लिप्तत्वेन अनीश्वरत्वं स्यात्? तत्राः आत्मनेति। स तु आत्मना अन्तर्वृत्या तु रमया स्वरूप शक्त्यैव रेमे रतिं प्राप्नोति। वहिरेव मायया सेव्य इत्यर्थः। एष प्रपन्न वरदो रमयात्मशक्त्या यद् यत् करिष्यति गृहीत गुणावतारः इति तृतीये ब्रह्मस्तवात्। अत्र मायां व्युदस्य चिच्छक्त्या कैवल्येस्थित, आत्मनीति प्रथमे श्रीमदर्ज्जुनवचनाद्। तर्हि तत् प्रेरणं विना कथं सृष्टि स्तत्राह। सिसृक्षया स्रष्टुमिच्छयात्यक्तः, सृष्टचर्थं प्रहितः कालः यस्मात् रमणात् तादृशं यथास्यात्तथा रेमे। प्रथमान्तपाठस्तु सुगमः तत् प्रभावरूपेण तेनैव सा सिध्यतीति भावः। "प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्" कालवृत्त्या तु मायायां गुणमय्या-मधोक्षजः। पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्" इति च तृतीयात्॥

---

वाक्य से ज्ञात होता है, श्रीहरि, माया वश्य नहीं हैं, निज चित्शक्ति में विलास करते हैं, जीव मायावृत हैं, उनकी प्रेरणा के बिना सृष्टि कैसे होगी? कहते हैं,—जब सृष्टि करने की इच्छा होती है, तब सृष्टि के लिए काल को प्रेरण करते हैं, और प्रकृति को विक्षुब्ध करते हैं। यहाँ त्यक्त कालः पाठ ही सुगम है। काल के प्रभाव से ही प्रकृति सृष्टि कार्य में समर्था होती है। प्रभाव को ही पौरुष कहते हैं, जिस से भय-संसार होता है, कालशक्ति के द्वारा गुणमयी माया में अधोक्षज पुरुष रूप में सृष्टि के हेतु बीजवपन करते हैं। यह विवरण तृतीय स्कन्ध में है।

रमा कौन है? कहते हैं नियति है, स्वयं भगवान् में विराज माना होने से नियति नाम है, वह स्वरूप भूता चिच्छक्ति है। देवी शब्द से द्योतमाना स्व प्रकाशरूपा अर्थ होता है। अतएव भगवान् की प्रिया एवं वशम्वदा है। द्वादश स्कन्ध ११-२० श्लोक में उक्त है, साक्षात् श्रीहरि की आत्मभूता अनपायिनी श्रीशक्ति है, टीका

**तल्लिङ्गं भगवान् शम्भु ज्योतीरूपः सनातनः ।**
**या योनिः सा पराशक्तिः कामो बीजं महद्धरेः ॥८॥**

ननु रमैव सा का तत्राह, नियतिरित्यर्द्धेन, नियम्यते स्वयं भगवत्येव नियता भवतीति नियतिः स्वरूपभूता तच्छक्तिः । देवी द्योतमाना स्वप्रकाशरूपा, इत्यर्थः । तदुक्तं द्वादशे ११ अः ।२० श्लोके । अनपायिनी भगवती श्रीः साक्षादात्मनोहरेः" इति । टीका च अनपायिनी हरेः शक्तिः । तत्र हेतुः, साक्षादात्मन इति स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः । इत्येषा । अत्र साक्षात् शब्देन विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया" इत्याद्युक्तया माया नेति ध्वनितम् । तत्रानपायित्वं यथा विष्णुपुराणे-नित्यैव सा जगन्माता विष्णोः श्री रनपायिनी, यथा सर्वगतो विष्णु स्तथैवेयं द्विजोत्तम" इति । एवं यथा जगत् स्वामी देवदेवोजनार्दनः । अवतारं करोत्येषा तथा श्रीस्तत् सहायिनी" इति च । देवत्वे देवदेहा सा मानुषत्वे च मानुषी, हरे र्देहानूरूपां वै करोत्येषात्मनस्तनुम् ।" इति च । हयशीर्ष पञ्चरात्रे-न विष्णुना विनादेवी न हरिः पद्मजां विना" इति ॥७॥

जगत् कारणशङ्कामपनोदयन्निर्णयति जोतिरूपः सनातनः

हरि की शक्ति अनपायिनी है, उस में हेतु है-साक्षात् आत्मा, स्वरूप चिद्रूप है । उन के साथ श्री का अभेद है । यहाँ साक्षात् शब्द से श्रीहरि की दृष्टि पथ में जो शक्ति रहने में लज्जिता होती है, वह नहीं है, वह तो माया शक्ति है । विष्णु पुराण में अनपायिनी शक्ति का विवरण इस प्रकार है, जगन्माता श्री नित्या अनपायिनी है, विष्णु जिस प्रकार सर्वगत है, वह भी उस प्रकार है, जगत् स्वामी देव देव जनार्दन जब जब अवतार लीला करते हैं, तब उनकी श्री भी अवतीर्ण होती है । देवता में देवता मानुष में मानुषी, श्रीहरि देह के अनुरूप निज देह को प्रकट करती है, हयशीर्षपञ्चरात्र में उक्त है-श्रीविष्णु को छोड़कर देवी नहीं रहती हैं, देवी को छोड़कर विष्णु भी नहीं रहते हैं । इति च ॥७॥

**लिङ्गयोन्यात्मिकाजाता इमा माहेश्वरीः प्रजाः ॥८॥**

भगवान् शम्भुः तल्लिङ्गं भवति । या योनिः सा अपरा प्रधानाख्या शक्ति र्भवति, हरेः तस्य पुरुषाख्य हर्य्यंशस्य कामोवीजं महद्भवति ।८

ननु कुत्रापि शिवशक्त्योः कारणता श्रूयते, तत्र विराड् वर्णनवत् कल्पनयेति तदङ्गविशेषत्वेनाह—तल्लिङ्गमिति । यस्यायुता युतांशांशे विश्वशक्तिरियं स्थिता इति विष्णुपुराणानुसारेण प्रपञ्चात्मनस्तस्य महाभगवदंशस्य स्वांशज्योतिराच्छन्नत्वादप्रकट-रूपस्य पुरुषस्य लिङ्गं लिङ्गस्थानीयः यः प्रपञ्चोत्पादकोऽंशः स एव शम्भुः (१) अन्यस्तु तदादिर्भाव विशेषत्वादेव शम्भुरुच्यते इत्यर्थः। वक्ष्यते च क्षीरं यथा दधिविकारविशेषयोगाद् संजायते न तु ततः पृथगस्ति हेतोरित्यादि । तथा तस्य वीर्य्यविधानस्थानरूपाया मायाया अप्यप्रकटरूपाया या योनि र्योनिस्थानीयोऽंशः, सैवापरा प्रधानाख्याशक्तिरिति पूर्ववत् । तत्र च हरे स्तस्य पुरुषाख्य हर्य्यंशस्य कामो भवति सृष्ट्यर्थं तद्दिदृक्षा जायते,-इत्यर्थः । ततश्च महदिति सजीवमहत्तत्त्वरूपं वीजमाहितं भवतीत्यर्थः । सोऽकामयतेति श्रुतेः, कालवृत्त्या तु मायायामिति तृतीयाच्च ॥८॥

(१) शं भावयति स्वद्वितीयव्यूहसङ्कर्षणात्मना प्रकृतिविलीनानां जीवानां तत्तदुपाधिसृष्ट्या इति शम्भुः-लघुभागवतामृत टीका ॥

माहेश्वरीः इमाः प्रजाः लिङ्गयोन्यात्मिकाः जाताः ।

अतः शिवशास्त्रमपि तत् विशेषाविवेकादेवस्वातन्त्र्येण प्रवर्त्तते

---

किसी किसी शास्त्र में शिव-शक्ति को जगत् कारण कहा गया है, उस का समाधान करते हैं, जिस प्रकार विराड् पुरुष की वर्णना में ब्रह्माण्ड को ही भगवान् का स्वरूप माना गया है । उस प्रकार श्रीभगवान् के अङ्ग विशेषरूप में शिवशक्ति को जगत् कारण कहा गया है ॥८॥

अतः शिवशास्त्र एवं तन्त्रादि शास्त्र का वर्णन जहाँपर स्वतन्त्र रूप से हुआ है, वह वास्तविक नहीं है, पूर्वोक्त तात् पर्य्याव

शक्तिमान् पुरुषः सोऽयं लिङ्गरूपी महेश्वरः ।
तस्मिन्नाविरभूल्लिङ्गे महाविष्णुर्जगत्पतिः ॥१०॥
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्रबाहु विश्वात्मा सहस्रांशः सहस्रसुः ॥११॥

---

वस्तुतस्तु पूर्वाभिप्रायत्वमेवेत्याह लिङ्गेत्यर्द्धेन । माहेश्वरीः माहेश्वर्य्यः ॥९॥

सोऽयं शक्तिमान् पुरुष लिङ्गरूपी महेश्वरो भवति ।
तस्मिन् लिङ्गे जगत् पति महाविष्णुः आविरभूत् ॥१०॥

शक्तिमानित्यर्द्धेन तदेवानूद्य तस्मिन् पूर्वोक्ताप्रकटरूपस्य प्रकट रूपतयापुनरभिव्यक्तिरित्याह, तस्मिन्नित्यर्द्धेन । तस्माल्लिङ्गरूपी प्रपञ्चोत्पादकस्तदंशोऽपि शक्तिमान् पुरुषोच्यते । महेश्वरोऽप्युच्यते ततश्च तस्मिन् भूतसूक्ष्मपर्यन्ततां प्राप्तेलिङ्गे स्वयं तदंशी महाविष्णुराविरभूत्–प्रकटरूपेणाविर्भवति । यतो जगतां सर्वेषां परावरेषां जीवानां स एव पतिरिति ॥१०॥

स: सहस्रशीर्षा पुरुषः, सहस्राक्षः सहस्रपात् ।

---

धारण से ही ही अर्थ करना आवश्यक है। प्रस्तुत श्लोक में उस का ही वर्णन है, पुरुष एवं प्रकृति से उत्पन्ना माहेश्वरी प्रजा है, अर्थात् महेश्वर, पुरुष, उनसे उत्पन्न है ॥९॥

पूर्वश्लोक का अभिप्राय को स्पष्ट करके इस श्लोक में कहते हैं। पहले अप्रकट रूप में जो थे, उनका ही प्रकट रूप में अभिव्यक्ति होती है, वह किस प्रकार हैं, कहते हैं, लिङ्ग रूपी, कारण रूपी प्रपञ्चोत्पादक व्यक्ति प्रथम पुरुष का अंश होने पर भी उनको शक्ति मान् पुरुष कहते हैं, महेश्वर भी कहते हैं। अतः उन भूत सूक्ष्म पर्य्यन्त प्राप्त लिङ्ग रूप कारण पुरुष में स्वयं तदंशी महाविष्णु आविर्भूत होते हैं, अर्थात् अप्रकट स्वरूप पुरुष में महाविष्णु प्रकट रूप में आविर्भूत होते हैं, आप समस्त जगत् के समस्तवस्तुओं के पूर्वोत्पन्न परोत्पन्न समस्त जीवों के ही पति हैं ॥१०॥

**नारायणः स भगवानापस्तस्मात् सनातनात् ।**
**आविरासीत् कारणार्णोनिधिः सङ्कर्षणात्मकः ।**
**योगनिद्रागतस्तस्मिन् सहस्रांशः स्वयं महान् ॥१२॥**

---

सहस्रबाहुः विश्वात्मा सहस्रांशः सहस्रसूर्भवति ॥११॥

तदेवं रूपं विवृणोति–सहस्रशीर्षेति । सहस्रमंशा अवतारा यस्य स सहस्रांशः । सहस्रं सूते सृजति यः स सहस्रसूः । सहस्रशब्दः सर्व्वत्रासंख्यतापरः । द्वितीये च तस्यैव रूपमिदमुक्तं, 'आद्योऽवतारः 'पुरुषः परस्ये'ति । अस्य टीकायां—'यस्य सहस्रशीर्षेत्युक्तो लीलाविग्रहः परस्य भूम्नः आद्योऽवतार' इति ॥११॥

सः भगवान् नारायणः अस्ति, तस्मात् सनातनात् आप एव कारणार्णोनिधिः आविरासीन्, सतु सङ्कर्षणात्मको भवति, तस्मिन् कारणार्णवे स्वयं महान् सहस्रांशः योगनिद्रागतः वर्त्तते ॥१२॥

अयमेव कारणार्णवशायीत्याह नारायण इति सार्द्धेन । ताः आप एव कारणार्णोनिधिराविरासीत्, सतु नारायणः सङ्कर्षणात्मकः इति; पूर्वं गोलोकावरणतया य श्चतुर्व्यूह मध्ये सङ्कर्षणः सम्मतः तस्यैवांशोऽयमित्यर्थः । तदुक्तं आपोनारा इति प्रोक्ता आपो वै नर सूनवः तस्य ता अयनं पूर्वं तेन नारायणः स्मृतः'' इति ॥१२॥

---

**उनके रूप को कहते हैं, उन विश्वात्मा पुरुष के सहस्र मस्तक सहस्र नयन, सहस्र चरण, सहस्र बाहु एवं सहस्र अवतार हैं । जिन के सहस्रांश कहते हैं, असंख्य सृजन सहस्र सृजन जो करते हैं, उन्हें सहस्रसू कहते हैं, सहस्र शब्द–सर्वत्र असंख्य अर्थ में प्रयुक्त होता है । द्वितीय स्कन्ध में उनके रूपका वर्णन है, पर पुरुष का आद्य अवतार इस की टीका में उक्त है, जिन को सहस्र शीर्ष रूप से कहा गया है, वह लीला विग्रह हैं, भूमा पर पुरुष के आद्य प्रथम अवतार हैं ॥११॥**

**आप ही भगवान् कारणार्णवशायी नित्य स्वरूप नारायण हैं । उन से प्रथम जो कारण सलिल की उत्पत्ति हुई थी, उस का नाम ही कारण समुद्र है, वह नारायण,–सङ्कर्षणात्मक है, पहले**

तद्रोमविलजालेषु वीजं सङ्कर्षणस्य च ।
हैमान्यण्डानि जातानि महाभूतावृतानितु ॥१३॥

---

तस्मादेव ब्रह्माण्डानामुत्पत्तिमाह—तस्य सङ्कर्षणस्य वीजं रोम विलजालेषु महाभूतावृतानि तु हैमानि अण्डानि जातानि ॥१३।

तस्मादेव ब्रह्माण्डानामुत्पत्तिमाह-तद्रोमेति । तदिति तस्येत्यर्थः तस्य सङ्कर्षणात्मकस्य यद्वीजं योनिशक्तावध्यस्तं तदेव पूर्वं भूत सूक्ष्मपर्यन्ततां प्राप्तं सत् पश्चात्तस्य लोमविलजालेषु विवरेषु अन्तर्भूतञ्च सत् हैमानि अण्डानि जातानि तानि चापञ्चीकृतांशैः महाभूतै र्जातानीत्यर्थः । तदुक्तं श्रीदशमे ब्रह्मणा, "क्वेदृग्विधा विगनिताण्डपराणुचर्य्या, वाताध्वरोमविवरस्य च ते महित्वम्" इति, तृतीये च, विकारैः सहितो युक्तै विशेषादिभिरावृतः । अण्ड कोषो वहिरयं पञ्चाशत् कोटि विस्तृतः । दशोत्तराधिकै र्यत्र प्रविष्टः परमाणुवत् । लक्ष्यन्तेऽन्तर्गतश्चान्ये कोटिशो ह्यण्डराशयः इति" ।१३

---

गोलोक के आवरण के मध्य में चतुर्व्यूह का कथन है, उनमें से द्वितीय व्यूह सङ्कर्षण है, उनका अंश ही यह नारायण सहस्रांश स्वयं महान् नाम से ख्यात हैं। उनकी लीला को कहते हैं, आप योग-निद्रा में अवस्थित हैं, अर्थात् स्वरूपानन्द समाधि में अवस्थित हैं। कथित है-आप जलको नारा कहतेहैं—मनुष्य को आप कहते हैं, उस तत्त्व के आश्रय को नारायण कहते हैं ॥१२॥

कारणार्णवशायी से ब्रह्माण्ड की उत्पत्ति का वर्णन करते हैं, उन सङ्कर्षणात्मक पुरुष का जो बीज अर्थात् पूर्वोक्त जीव सहित महत्तत्व प्रकृति में निहित था, वह पहले सूक्ष्म पर्य्यन्त अवस्था को प्राप्त कर पश्चात् उन के लोम विवर में अन्तर्भूत होकर स्वर्णमय अण्ड रूप में प्रकट हुआ, यह सब अण्ड अपञ्चीकृत अर्थात् परस्पर अमिश्रित महाभूत के द्वारा आवृत है। श्रीदशम में ब्रह्मा जी की उक्ति इस प्रकार है-आप की महिमा इस प्रकार है, रोम विवर में अगणित ब्रह्माण्ड के प्रवेश निर्गमन होते रहते हैं। तृतीय में कथित

प्रत्यण्डमेवमेकांशादेकांशाद्विशति स्वयम् ॥१४।
बामाङ्गादसृजद्विष्णुं दक्षिणाङ्गात् प्रजापतिम् ।
ज्योतिर्लिङ्गमयं शम्भुं कूर्च्चदेशादवासृजत् ॥१५॥

सः स्वयम् एकांशाद् एकांशाद् प्रत्यण्डमेव विशति ॥१४॥

ततश्च तेषु ब्रह्माण्डेषु पृथक् पृथक् स्वरूपैः स्वरूपान्तरैः स एव प्रविवेशेत्याह-प्रत्यण्डमिति । एकांशादेकांशादेकैनैकेनांशेनेत्यर्थः ।१४।

सः वामाङ्गाद् विष्णुं असृजत्, दक्षिणाङ्गात् प्रजापतिं असृजत् । ज्योति लिङ्गमयं शम्भुं कूर्च्च देशात् भ्रुवोर्मध्यात् अवासृजत् ॥१५॥

पुनः किं चकार तत्राह-बामाङ्गादिति । विष्ण्वादय इमे सर्वेषामेव ब्रह्माण्डानां पालकादयः प्रति ब्रह्माण्डान्तः स्थितानां विष्ण्वादीनां स्वांशानां प्रयोक्तारः, यथा प्रतिब्रह्माण्डं तथा अधि ब्रह्माण्डमण्डलमभ्युपगन्तव्यमिति भावः । येषु प्रजापतिरयं हिरण्य गर्भरूप एव नतु वक्ष्यमाण चतुर्म्मुख रूप एव, सोऽयं तत्तदावरणगत

है—पञ्चाशत् कोटि बिस्तृत ब्रह्माण्ड समस्त पदार्थों के सहित ब्रह्माण्ड जहाँपर प्रविष्ट होते रहते हैं, इस कोटिश ब्रह्माण्ड परमाणुवत् आपके लोम विवर में दृष्ट होते रहते हैं ॥१३॥

अनन्तर आप उन उन ब्रह्माण्ड समूह में एक एक अंश के द्वारा पृथक् पृथक् स्वरूप द्वारा रूपान्तर से वहुरूप धारण कर प्रविष्ट होते है, एकांशादेकांशात् का अर्थ है, एक एक अंश के द्वारा ॥१४॥

श्रीमहाविष्णुने पुनः क्या किया, उसका विवरण कहते हैं। निज बामाङ्ग से विष्णु का सृजन किया, ब्रह्मा विष्णु महेश्वर समस्त ब्रह्माण्डों के पालक स्रष्टा संहारक हैं, प्रति ब्रह्माण्डस्थित विष्णु ब्रह्मा शिव रूप निजांश के प्रयोक्ता हैं जिस प्रकार। उस प्रकार अधि ब्रह्माण्ड मण्डल को जानना होगा इस में प्रजापति,-हिरण्यगर्भरूप हैं, किन्त वक्ष्यमान् चतुर्म्मुख ब्रह्मा यह तत्तदावरणगत तत्तद् देवताओं के स्रष्टा हैं, विष्णु एवं शम्भु उन उन ब्रह्माण्ड के

**अहङ्कारात्मकं विश्वं तस्मादेतद् व्यजायत ॥१६॥**
**अथतैस्त्रिविधैर्वेशै लीलामुद्वहतः किल।**
**योगनिद्रा भगवती तस्य श्रीरिव सङ्गता ॥१७॥**

---

तत्तद् देवानां स्रष्टेति। विष्णुशम्भू अपि तत्तत् पालनसंहारकर्त्तारौ ज्ञेयौ। कूर्च्चदेशात् भ्रुवोर्मध्यात्। एषां जलावरण एव स्थानानि ज्ञेयानि ॥१५॥

एतद् विश्वं तस्मादेव अहङ्कारात्मकं व्यजायत बभूव ॥१६॥

तत्र शम्भोः कार्य्यान्तरमप्याह—अहङ्कारात्मकमित्यर्द्धेन। एतद्विश्वं तस्मादेवाहङ्कारात्मकं व्यजायत बभूव। विश्वस्याहङ्कारात्मकता तस्माज्जातेत्यर्थः सर्वाहङ्काराधिष्ठातृत्वात्तस्य ॥१६॥

अथ तैः त्रिविधैः वेशैः लीलां उद्वहतः, तस्य योगनिद्रा भगवती श्रीरिव सङ्गता किल ॥१७॥

ब्रह्माण्डप्रविष्टस्य तु तत्तद्रूपस्य लीलामाह, अथ तैरित्यादि। तैस्तत् सदृशैस्त्रिविधैः प्रतिब्रह्माण्डगतविष्ण्वादिभि र्वेशै रूपै र्लीलां ब्रह्माण्डान्तर्गतपालनादिरूपामुद्वहतो ब्रह्माण्डान्तर्गतपुरुषस्येति तामुद्वहति, तस्मिन्नित्यर्थः। योगनिद्रा,—पूर्वोक्तमहायोगनिद्रांशभूताभगवती स्वरूपानन्दसमाधिमयत्वादन्तर्भूतसर्वैश्वर्य्या सङ्गता श्रीरिवेति। तत्र, यथा श्रीरप्यंशेन सङ्गता तथा सापीत्यर्थः ॥१७॥

---

पालन कर्त्ता एवं संहार कर्त्ता हैं। कूर्च्चदेश का अर्थ है भ्रू द्वय के मध्य वर्त्ती स्थान से। इन सब के ब्रह्माण्ड समूह जल से परिवेष्टित है ॥१५॥

उन में से शम्भु का कार्यान्तर को कहते हैं। यह विश्व उन से ही अहङ्कारात्मकता, विश्व का अहङ्कार तत्त्व उन से ही उत्पन्न हुआ है, आप समग्र अहङ्कार के अधिष्ठाता हैं ॥१६॥

ब्रह्माण्ड प्रविष्ट ब्रह्मा विष्णु महेश्वर की लीला को कहते हैं। प्रति ब्रह्माण्ड गत उनके सदृश विष्णु ब्रह्ममहेश्वर रूप में ब्रह्माण्ड-

सिसृक्षायां ततो नाभेस्तस्य पद्मं विनिययौ ।
तन्नालं हेमनलिनं ब्रह्मणो लोकमद्भुतम् ॥१८॥
तत्त्वानि पूर्वरूढ़ानि कारणानि परस्परम् ।
समवायाप्रयोगाच्च विभिन्नानि पृथक् पृथक् ।

---

ततः सिसृक्षायां तस्य नाभेः पद्मं विनिर्ययो ।
तत्नालं हेमनलिनं ब्रह्मणः अद्भुतंलोकं अस्ति ॥१८॥

ततश्च सिसृक्षायामिति । नालं नालयुक्तं तद्धेमनलिनं ब्रह्मणो जन्मशयनयोः स्थानत्वात् लोकइत्यर्थः ॥१८

भगवान् आदिपूरुषः देवः चिच्छक्त्या सज्जमानः अथ पूर्वरूढ़ानि कारणानि तत्त्वानि परस्परम् समवायाप्रयोगाच्च विभिन्नानि मायया पृथक् पृथक् योजयन् योगनिद्रां अकल्पयत् स्वीकृत वानित्यर्थः ॥१९॥

तथा असंख्य जीवात्मकस्य समष्टिजीवस्य प्रवोधं वक्तुं पुनः

---

अन्तर्गत पालन सृजन संहार रूप लीला को जब करते रहते हैं, तब पूर्वोक्त महायोगनिद्रा की अंशभूता भगवती योगनिद्रा स्वरूपानन्द समाधिमय होने से अन्तर्भूतसमस्तऐश्वर्य्यसम्पन्ना देवी श्री के समान उन सब की अनुगता होती रहतीहै, जिस प्रकार सङ्कर्षणात्मक भगवान् नारायण के सहित श्री लक्ष्मी अंश से मिलित हैं, उस प्रकार महायोगनिद्रा की अंशभूता भगवती प्रति ब्रह्माण्डान्तर्गत पालनादि लीलाकारी विष्णु ब्रह्मा, रुद्र, स्वरूप के सहित अंश से मिलित रहती है ॥१७॥

अनन्तर उनकी विश्व सृजन करने की इच्छा होने से उनकी नाभि से नाल युक्त अद्भुत स्वर्णकमल निर्गत हुआ, वह ब्रह्मा के शयन एवं जन्मस्थान है ॥१८॥

उस प्रकार असंख्य जीवात्मकसमष्टि जीव का प्रवोधन को कहने के लिए पुनः तृतीय स्कन्धोक्तानुसारिणी कारणार्णवशायी की सृष्टि प्रक्रिया को सुस्पष्ट रूप से कहतेहैं । तत्त्वानि तीन श्लोकोंके द्वारा

चिच्छक्त्या सज्जमानोऽथ भगवानादिपूरुषः ।
योजयन् मायया देवो योगनिद्रामकल्पयत् ॥१६॥
योजयित्वाथ तान्येव प्रविवेश स्वयं गुहाम् ।
गुहां प्रविष्टे तस्मिंस्तु जीवात्मा प्रतिबुध्यते ॥२०॥
स नित्यो नित्यसम्बन्धः प्रकृतिश्च परैव सा ॥२१॥

---

कारणार्णोनिधिशायिनस्तृतीयस्कन्धोक्तानुसारिणीं सृष्टिप्रक्रियां विवृत्याह—तत्त्वानीति त्रयेण । तत्र द्वयमाह, मायया स्वशक्त्या परस्परं तत्त्वानि योजयन्निति, योजनानन्तरमेव निरीहतया योगनिद्रामेव स्वीकृतवानित्यर्थः ॥१६॥

अथ तानि एव योजयित्वा स्वयं गुहां प्रविवेश । तु गुहां प्रविष्टे तस्मिन् जीवात्मा प्रतिबुध्यते ॥२०॥

अथ तृतीयमाह—योजयित्वेति । योजयित्वा तद् योजना योगनिद्रयोरन्तराले इत्यर्थः । गुहां विराड् विग्रहं, प्रतिबुध्यते—प्रलयस्वापाज्जागर्त्ति । २०॥

सः जीवात्मा, नित्यः । भगवता समं नित्यसम्बन्धः, प्रकृतिः

---

उस में से श्लोक को कहते हैं, निज शक्ति रूपी माया द्वारा परस्पर तत्त्वों को योजित कर, योजनानन्तर निरीह रूप से योगनिद्रा को स्वीकार किए । अर्थात् कारणार्णवशायी लीलामय आदि पुरुष भगवान् चिच्छक्ति के साथ आसक्त होकर पूर्वोक्त कारण रूप पृथिवादि तत्त्व समूह जो समवेत नहीं थे विभिन्न रूप में थे, उसे निज माया शक्ति के द्वारा परस्पर योजना करतः निश्चेष्ट होकर योगनिद्रा को अङ्गीकार किए ॥१६॥

अनन्तर तृतीय लोक को कहते हैं । योजना करने के पश्चात् अर्थात् तत्त्वों की योजना एवं योगनिद्रा का अङ्गीकार इन दोनों के मध्य समय में गुहा नामक विराड् शरीर में प्रविष्ट हुए, अनन्तर जीवात्मा प्रलय कालीन निद्रा को छोड़कर जग गई ॥२०॥

**एवं सर्वात्मसम्बन्धं नाभ्यां पद्मं हरेरभूत्।**
**तत्र ब्रह्माभवद्भूयश्चतुर्वेदी चतुर्म्मुखः ॥२२॥**

---

च सा परा एव ॥२१॥

जीवस्य स्वाभाविकी स्थितिमाह–स नित्य इत्यर्द्धेनेति, नित्योऽनाद्यनन्तकालभावी नित्यसम्बन्धो भगवतासह समवायो यस्य सः। सूर्य्येण तद्रश्मिजालस्येवेति भावः। यत्तटस्थन्तु चिद्रूपं स्वसम्वेद्याद्विनिर्गतम्। रञ्जितं गुणरागेण स जीव इति कथ्यते॥ इति नारद पञ्चरात्रात्। ममैवांशो जीवलोके जीवभूतः सनातनः' इति श्रीगीताभ्यश्च। अतएव प्रकृतिः साक्षिरूपेण स्वरूपस्थित एव। स्वप्रतिविम्बरूपेण प्रमातृरूपेण प्रकृतिमिव प्राप्तश्चेत्यर्थः। प्रकृतिं विद्धि मे पराम्। जीवभूतामिति श्रीगीतास्वेव। द्वा सुपर्णा सयुजा सखाया'' इति श्रुतिश्च नित्यस्वरूपं दर्शयति।॥२१॥

एवं हरेः नाभ्यां सर्वात्मसम्बन्धं पद्मं अभूत्।
तत्र भूयः, चतुर्वेदी चतुर्म्मुखः ब्रह्मा अभवद् ॥२२॥

---

**जीव की स्वाभाविकी स्थिति को कहते हैं, स नित्यः" इस अर्द्ध श्लोक द्वारा। वह जीवात्मा नित्य है, अर्थात् अनादि अनन्त काल स्थायी है, भगवान् के साथ जीव का नित्य सम्बन्ध समवाय सम्बन्ध है। जिस प्रकार सूर्य के साथ सूर्य्य रश्मि का नित्य सम्बन्ध है, उस प्रकार श्रीभगवान् के साथ जीव का नित्य सम्बन्ध है। नारद पञ्च रात्र में उक्त है, जो तटस्थ शक्ति एवं चिद्रूप है, एवं स्वसम्वेद्य पदार्थ से निर्गत है, पश्चात् प्रकृति के गुण राग से रञ्जित है। उस को जीव कहते हैं, श्रीगीता में कथित है, मेरा ही अंश जीव है, वह जीवभूतः सनातन है, अतएव प्रकृति साक्षिरूप में स्वरूप में स्थित होता है। स्वप्रतिविम्ब रूप से प्रमातृ रूप होता है, और प्रकृति के समान ही वह प्रतिभात होता है, श्रीगीता में उक्त है, जीव को परा प्रकृति रूप से जानना। दो सुपर्ण सखा रूप में एकत्र अवस्थानकारी है, श्रुति नित्य स्वरूप को कहती है ॥२१॥**

स जातो भगवच्छक्त्या तत् कालं किलचोदितः।
सिसृक्षायां मतिं चक्रे पूर्वसंस्कारसंस्कृताम् ॥
ददर्श केवलं ध्वान्तं नान्यत् किमपि सर्वतः ॥२३॥
उवाच पुरत स्तस्मै तस्य दिव्या सरस्वती।
कामकृष्णाय गोविन्द ङे गोपीजन इत्यपि।
वल्लभाय प्रिया वह्नेरयं ते दास्यति प्रियम् ॥२४॥

---

अथ तस्य समष्टिजीवाष्ठानं गुहाप्रविष्टात् पुरुषादुद्भूत मित्याह एवमिति। ततः समष्टि देहाभिमानिन स्तस्य हिरण्य गर्भ ब्रह्मण स्तस्मात् भोगविग्रहोत्पत्तिमाह–तत्रेति ॥२२॥

सः जातः, भगवच्छक्त्या तत् कालं चोदितः किल, पूर्व संस्कारसंस्कृताम् सिसृक्षायां मतिं चक्रे" सर्वतः केवलं ध्यान्तं ददर्श, किमपि अन्यत् न ॥२३॥

अथ तस्य चतुर्मुखस्य चेष्टामाह–स जात इतिसार्द्धेन स्पष्टम् २३

तस्य पुरतः दिव्या सरस्वती उवाच, काम कृष्णाय गोविन्द ङे गोपीजन इति अपि वल्लभाय वह्नेः प्रिया अयं ते प्रियम्

---

अनन्तर गुहा प्रविष्ट पुरुष से समष्टि जीवाधिष्ठान उद्‌भूत हुआ, अनन्तर समष्टि देहाभिमानी हिरण्य गर्भ ब्रह्मा का भोग विग्रह की उत्पत्ति हुई। इस प्रकार श्रीहरि के नाभिदेश में समस्त आत्मा के साथ सम्बन्ध विशिष्ट पद्म आविर्भूत हुआ, उस कमल में पुनर्वार हिरण्यगर्भ ब्रह्मा का भोग विग्रह स्वरूप चतुर्वेद कर्त्ता चतुर्मुख ब्रह्मा की उत्पत्ति हुई ॥२२॥

अनन्तर उन चतुर्म्मुख ब्रह्मा की चेष्टा को कहते हैं, सार्द्ध श्लोक के द्वारा, ब्रह्मा, जन्म ग्रहण करने के बाद भगवत् शक्ति से निमित्त प्रयत्न करने लगे। किन्तु उस समय आपने सर्वत्र अन्धकार को ही देखा। अपर कुछ भी दिखाई नहीं दिया ॥२३॥

अनन्तर पूर्व उपासना भाग्य लब्ध ब्रह्मा के प्रति भगवत् कृपा

तप त्वं तप एतेन तव सिद्धिर्भविष्यति ॥२५॥
अथ तेपे स सुचिरं प्रीणन् गोविन्दमव्ययम्।
श्वेतद्वीपपतिं कृष्णं गोलोकस्थं परात्परम्।

---

दास्यति ॥२४॥

अथ तस्मिन् पूर्वोपासनाभाग्यलब्धां भगवत्कृपामाहोवाचेति सार्द्धेन; स्पष्टम् ॥३४॥

त्वं तप, तप, एतेन तव सिद्धिः भविष्यति ॥२५॥

एतदेव स्पर्शेषु यत् षोड़शमेकविंशमिति तृतीय स्कन्धानुसारेण योजयति तप त्वं इत्यर्द्धेन; स्पष्टम् ॥२५॥

अथ सः गोविन्दं अव्ययं प्रीणन् सुचिरं तेपे। कीदृशं तं, श्वेत

---

हुई, सार्द्ध श्लोक से उसका वर्णन करते हैं। उस समय ब्रह्मा के सामने दैववाणी हुई, उस से यह सूचित हुआ कि प्रथम कामवीज पश्चात् कृष्णाय पद, उसके वाद चतुर्थ्यन्त गोविन्द शब्द, तत् पश्चात् गोपीजन वल्लभाय, तदन्त में वह्नि प्रिया अर्थात् स्वाहा समन्वित अष्टादशाक्षर मन्त्र तुम्हारे प्रिय विधान करेगा ॥२४॥

इस मन्त्र द्वारा तपस्या करो, इस से सिद्धि होगी। उस का स्पष्टी करण कररहे हैं, तुम तपस्या करो, द्वितीय स्कन्ध के नवमाध्याय के षष्ठ श्लोक के द्वारा उसकी योजना कर रहे हैं।

स चिन्तयन् द्व्यक्षरमेकदाम्भस्युपाश्रृणोद् द्विर्गदितं वचोविभुः।
स्पर्शेषु यत् षोड़शमेकविंशं निष्किञ्चनानां नृप यद्धनं विदुः॥

सृष्टिं चिन्तयन् कदाचिद् द्व्यक्षरं वचः अम्भसिउपाश्रृणोत् उप समीपे श्रुतवान्। ते अक्षरे दर्शयति। कादयो मावसानाः स्पर्शाः, तेषु यत् षोड़शं तकारः, यच्चैकविंशं पकारः। वचसो निर्द्देशार्थं तदर्थमाह।

हे नृप! निष्किञ्चनानां त्यक्त धनानां धनं यद्विदुः, येन तपोधनाः प्रसिद्धाः। तच्च द्विर्गदितं तप तपेति लोटो मध्यम पुरुषैक वचनं तस्य बीप्सा सादर विधिरूपां अश्रृणोदित्यर्थः ।२५। २।९।६भा०

प्रकृत्या गुणरूपिण्या रूपिण्या पर्य्युपासितम् ।
सहस्रदलसम्पन्ने कोटिकिञ्जल्कबृंहिते ।
भूमिश्चिन्तामणिस्तत्र कर्णिकारे महासने ।
समासीनं चिदानन्दं ज्योतीरूपं सनातनम् ।
शब्दब्रह्ममयं वेणुं वादयन्तं मुखाम्बुजे ।
विलासिनीगणवृतं स्वैः स्वैरंशैरभिष्टुतम् ॥२६॥

---

द्वीपपतिं कृष्णं गोलोकस्थं परात्परम्, प्रकृत्या गुण रूपिण्या रूपिण्या पर्य्युपासितम् सहस्रदलसम्पन्ने कोटिकिञ्जल्कबृंहिते भूमिश्चिन्तामणिः, तत्र महासने कर्णिकारे चिदानन्दं ज्योतीरूपं सनातनम् समासीनम् । मुखाम्बुजे शब्दब्रह्ममयं वेणुं वादयन्तं स्वैः स्वैरंशैरभिष्टुतम् विलासिनीगणवृतम् ॥२७॥

स तु तेन मन्त्रेण स्व कामनाविशेषानुसारात् सृष्टिकृत् शक्ति विशिष्टतया वक्ष्यमाणस्तवानुसारात् गोकुलाख्यपीठगततया श्री गोविन्दमुपासितवानित्याह, अथ तेपे इत्यादि चतुर्भिः । गुण रूपिण्या सत्त्वरजस्तमोगुणमय्या रूपिण्या मूर्त्तिमत्या पर्य्युपासितं परित स्तद् गोकुलाद् वहिस्थितयोपासितम्—ध्यानादिना अर्च्चितम् । माया परेत्यभिमुखे च विलज्जमाना" इति । वलिमुद्वहन्त्यजया निमिषा" इति च श्रीभागवतात् । अंशैस्तदावरणस्थैः परिकरैः ॥२६॥

---

श्रीब्रह्माजीने निज कामना के अनुसार सृष्टि कारिणीशक्ति युक्त दृष्टि से वक्ष्यमाण स्तवानुसार गोकुलाख्यपीठासीन श्रीगोविन्द देवकी उपासना की, उसका विवरण अथ तेपे चारश्लोकों से कहतेहैं। श्रीगोकुल के वाहर सत्त्व रजस्तमोगुणमयी मूर्त्तिमती शक्ति ध्यान से श्रीगोविन्द देवकी उपासना करती रहती, माया लज्जित होकर दृष्टि पथ के अन्तराल में रहती है. देवतागण वहिरङ्गा शक्ति के साथ श्रीगोविन्द देवकी उपासना के द्वारा उपासना करते रहते हैं। यह विवरण श्रीमद् भागवत में है। गोकुल के आवरणस्थ परिकर गण,

**अथ वेणुनिनादस्य त्रयी मूर्त्तिमतीगतिः ।**
**स्फुरन्ती प्रविवेशाशु मुखाब्जानि स्वयम्भुवः ।**
**गायत्रीं गायतस्तस्मादधिगत्य सरोजजः ।**
**संस्कृतश्चादिगुरुणा द्विजतामगमत्ततः ॥२७॥**

अथ वेणुनिनादस्य मूर्त्तिमती त्रयी गतिः स्फुरन्ती स्वयम्भुवः मुखाब्जानि आशु प्रविवेश । सरोजजः गायतः तस्मात् गायत्रीं अधिगत्य आदिगुरुणा संस्कृतः च ततः द्विजतां अगमत् ॥२७॥

तदेवं दीक्षातः परस्तादेव तस्य ध्रुवस्येव द्विजत्वसंस्कार स्तदाराधितात् तन्मन्त्राधिदेवाज्जातः इत्याह । अथ वेण्विति द्वयेन । त्रयीमूर्त्ति र्गायत्री, वेदमातृत्वात् । द्वितीय पद्ये तस्य एव व्यक्ति भावित्वाच्च । तन्मयी गतिः परिपाटी । मुखाब्जानि प्रविवेशेत्यष्ट कर्णैः प्राविवेशेत्यर्थः । आदि गुरुणा श्रीकृष्णेन ॥२७॥

---

जोकि उनके अंश रूप होते हैं, उपासना करते हैं । इस प्रकार ब्रह्मा श्वेत द्वीप, पति, परात् पर अव्यय गोलोकस्थ गोविन्दाख्य श्रीकृष्ण की प्रीति के निमित्त बहुकालयावत् तपस्या किए थे । बहिरङ्गाशक्ति भी गोलोक के बाहर रहकर ध्नान से उनकी उपासना करती है । चिन्तामणिमयभूमि विशिष्ट उस गोलोक में सहस्रदल सम्पन्न कोटि किञ्जल्क द्वारा परिशोभित कर्णिकार रूप महासन में – चिदानन्द मय ज्योति रूप, नित्य विग्रह, श्रीगोविन्द उपविष्टहैं, एवं वदनाम्बुज में शब्द ब्रह्म मय वेणु वादन कर रहें हैं । निज प्रेयसी वृन्द द्वारा परिवेष्टित हैं, गोलोक के आवरणस्थ निजपरिकर वृन्द उनकी स्तुति करते रहते हैं ॥२६॥

ध्रुव के समान ही ब्रह्मा का द्विजत्व संस्कार दीक्षा के पश्चात् हुआ, वह भी उन मन्त्राधिदेवता से ही हुआ । उसका विवरण "वेणु निनादस्य" श्लोक द्वय से कहते हैं । त्रयीमूर्त्ती गायत्री, वेद माता, द्वितीय पद्य में उस का सुस्पष्ट उल्लेख है । तन्मयीगति– अर्थात् परिपाटी, मन्त्र मुखाब्ज समूह में प्रविष्ट हुए थे–अष्ट कर्ण

त्रय्या प्रबुद्धोऽथ विधिर्विज्ञातः तत्त्वसागरः।
तुष्टाव वेदसारेण स्तोत्रेणानेन केशवं ॥२८॥
चिन्तामणिप्रकरसद्मसु कल्पवृक्ष-
लक्षावृतेषु सुरभिरभिपालयन्तम्।

---

अथ त्रय्या प्रबुद्धः विज्ञाततत्त्वसागरः विधिः।

अनेन वेदसारेण स्तोत्रेण केशवं तुष्टाव ॥२८॥

ततश्च त्रयीमपि तस्मात् प्राप्य तमेव तुष्टावेत्याह-त्रय्येति। केशानंशून् वयति विस्तारयतीति केशवस्तम्। अंशवो ये प्रकाशन्ते मम ते केशसंज्ञिताः। सर्वज्ञाः केशवं तस्माद् मामाहु र्मुनिसत्तमाः इति सहस्रनामभाष्योत्थापितकेशवनिरुक्तौ भारतवचनात् ॥२८॥

चिन्तामणिप्रकरसद्मसु लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानम् कल्पवृक्षलक्षावृतेषु सुरभिरभिपालयन्तम् तं आदिपुरुषं गोविन्दं अहं भजामि ॥२९॥

स्तुतिमाह चिन्तामणीत्यादिभिः। तत्र गोलोकेऽस्मिन्मन्त्र भेदेन तदेक देशेषु बृहद्ध्यानमयादिष्वेकस्यापि मन्त्रस्य रासमयादिषु

---

के द्वारा, जानना होगा। आदि गुरु श्रीकृष्ण के द्वारा संस्कृत हुए थे। इस प्रकार कमलयोनि ब्रह्मा आदि गुरु श्रीकृष्ण के निकट से गायत्री मन्त्र द्वारा संस्कृत होकर द्विजत्व प्राप्त किए थे ॥२७॥

अनन्तर त्रयी भी आदि गुरु श्रीकृष्ण से प्राप्त कर ब्रह्माजीने श्रीकृष्ण की ही स्तुति की। त्रय्येति श्लोक से उसे कहते हैं। केशव शब्द का अर्थ है—केश अंशु समूह का जो विस्तार कहते हैं, वह केशव है, अंश-शक्ति समूह का प्रकाश होने से ही मेरी केशव संज्ञा हुई है। सर्वज्ञ मुनि सत्तमगण तज्जन्य मुझ को केशव कहते हैं। विष्णु सहस्रनाम भाष्य में उत्थापित केशवनाम निरुक्ति में भारत का वचन उस प्रकार है ॥२८॥

स्तुति को कहते हैं, चिन्तामणि प्रभृति श्लोकों के द्वारा, इस गोलोक में मन्त्रभेद से गोलोक के एक देश में बृहद् ध्यान मयादि में

लक्ष्मीसहस्रशतसम्भ्रमसेव्यमानम्—
गोविन्दमादिपुरुषं तमहं भजामि ।२६॥
वेणुं क्वणन्तमरविन्ददलायताक्षम् ।
वर्हावतंसमसिताम्बुदसुन्दराङ्गम् ।

---

च पीठेषु सत्स्वपिमध्यस्थत्वेन मुख्यतया प्रथमं गोलोकाख्यपीठ-निवासयोग्यलीलया स्तौति—चिन्तामणीत्येकेन । अभि सर्वतोभावेन वननयन, चारण, गोस्थानानयन, सम्भालनप्रकारेण पालयन्तं सस्नेहं रक्षन्तं । कदाचिद्रहसि तु वैलक्षण्यमित्याह लक्ष्मीति लक्ष्म्योऽत्र गोपसुन्दर्य्य एवेति व्याख्यातमेव ॥२६॥

वेणुं क्वणन्तम्, अरविन्ददलायताक्षम्, वर्हावतंसम्, असिताम्बुदसुन्दराङ्गम्, कन्दर्पकोटिकमनीयविशेषशोभम् तं आदि पुरुषं गोविन्दं अहं भजामि ॥३०॥

---

एवं एकही मन्त्रका रासमयादिमय निवास स्थान रूप योगपीठ होने पर भी मध्यवर्त्ती मुख्य पीठ का ही वर्णन गोलोक नामक पीठ में निवास योग्य लीला के द्वारा स्तव करते हुये करते हैं. "चिन्तामणि" एक श्लोक के द्वारा। अति सर्वतोभाव से वन नयन चारण गोस्थानानयन सम्भालन प्रकार द्वारा पालन करते हैं, स्नेह पूर्वक रक्षा करते हैं। कभी एकान्त में विलक्षण लीला भी करते हैं, उन को कहते हैं, लक्षलक्ष कल्प वृक्ष के द्वारा समावृत चिन्तामणिमय मन्दिर में अनन्त व्रजसुन्दरीगण के द्वारा ससम्भ्रम से सेवित उन आदि पुरुष गोविन्द का मैं भजन करता हूँ। लक्ष्मी शब्द से यहाँपर गोपसुन्दरी गण को ही जानना होगा,उस प्रकार ही व्याख्या हुई है।२६

सहज कथा ही गान, गमन ही नाट्य, वंशी ही प्रियसखी रूप आचरण का वर्णन अग्रिम ग्रन्थ में करेंगे, उस रीति से चिन्तामणि मय भवनगत गोलोकीय विलक्षण पीठगत लीला का वर्णन करने के पश्चात् एक स्थान में अनुष्ठित कथा गानादि रहित बृहद्ध्यानादि की रीति से द्वितीय पीठगत लीला का वर्णन करते हैं। वेणु श्लोक द्वय

कन्दर्पकोटिकमनीयविशेषशोभम् ।
गोविन्दमादिपुरुषं तमहं भजामि ॥३०॥
आलोलचन्द्रकलसद्वनमाल्यवंशी-
रत्नाङ्गदं प्रणयकेलिकलाविलासम् ।
श्यामं त्रिभङ्गललितं नियतप्रकाशम् ।
गोविन्दमादिपुरुषं तमहं भजामि ॥३१॥

---

तदेवं चिन्तामणि प्रकरसद्ममयीं 'कथागानं नाट्यं गमनमपीति वक्ष्यमाणानुसारेण गोलोकाख्यविलक्षणपीठगतां लीलामुक्त्वा एक-स्थानस्थितिकां कथा गानादिरहितां बृहद्धयानादिदृष्टां द्वितीयपीठ-गतां लीलामाह वेणुमिति द्वयेन । वेणुमिति तत्र स्पष्टम् ॥३०॥

आलोलचन्द्रकलसद्वनमाल्यवंशीरत्नाङ्गदं प्रणयकेलिकला विलासं, श्यामं, त्रिभङ्गललितं नियतप्रकाशं तं आदि पुरुषं गोविन्दं अहं भजामि ॥३१॥

आलोलेत्यादि । प्रणय पूर्वको यः केलि परिहास स्तत्र या वैदग्धी सैव विलासो यस्य तं, द्रवकेलिपरीहासा इत्यमरः ॥३१॥

---

से ॥३०॥ जो सुमधुरस्वर से वेणु वादन करते हैं, जिन के नयन युगल पद्म पत्र के समान विस्तृत, मस्तक में मयूर पुच्छशोभित चूड़ा नवजलधर सदृश सुन्दरअङ्गकान्ति, कोटि कन्दर्प की रमणीयता तिरस्कारिणी अङ्गकी विशेषशोभा है, मैं उन आदि पुरुष गोविन्द का भजन करता हूँ ॥३०॥

प्रणय पूर्वक जो केलि-अर्थात् परिहासमयवचन, उस में जो कला-वैदग्धी, पाण्डित्य, वह ही विलास है जिनका, उनका भजन मैं करता हूँ। अमरकोषकार कहते हैं, द्रव केलिपरिहास । जिनके चूड़ास्थित मयूरपुच्छ मृदुमलयानिल से ईषत् कम्पित है, वनमाला वंशी, रत्नालङ्कारसमूह विशेषरूप से शोभित हैं, जो प्रीति रस परिपूरित परिहास चातुरी प्रकट परायण है, श्यामसुन्दर, त्रिभङ्ग

अङ्गानि यस्य सकलेन्द्रियवृत्तिमन्ति
पश्यन्ति पान्ति कलयन्ति चिरं जगन्ति ।
आनन्दचिन्मयसदुज्ज्वलविग्रहस्य
गोविन्दमादिपुरुषं तमहं भजामि ॥३२॥

---

आनन्द चिन्मय सदुज्ज्वलविग्रहस्य यस्य अङ्गानि सकलेन्द्रिय वृत्तिमन्ति, पश्यन्ति, पान्ति, कलयन्ति, चिरंजगन्ति, तं आदिपुरुषं गोविन्दं अहं भजामि ॥३२॥

तदेवं लीलाद्वयमुक्त्वा परमाचिन्त्यशक्त्यावैभवविशेषानाह-अङ्गानीति चतुर्भिः। तत्र श्रीविग्रहस्य अङ्गानि, हस्तोऽपि द्रष्टुं शक्नोति,चक्षुरपि पालयितुं पारयति,तथा अन्यदन्यदप्यङ्गमन्यदन्यत् कलयितुं प्रभवतीति । एवमेवोक्तं,—सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखमित्यादि । जगन्तीति, लीलापरिकरेषु तत्तदङ्गं यथास्वमेव व्यवहरतीति भावः। तत्र च तस्य विग्रहस्य वैलक्षण्यमेव हेतु रित्याह आनन्देति ॥३२॥

---

ललित, एवं सतत प्रकाशमान है, मैं उन आदि पुरुष श्रीगोविन्द का भजन करता हूँ ॥३१॥

लीलाद्वय कथन के पश्चात् परमाचिन्त्य शक्ति द्वारा विशेष वैभव का वर्णन करते हैं, अङ्गानीति चारश्लोकों से। उन श्रीविग्रह के अङ्ग समूह, इस प्रकार होते हैं। हस्त भी देख सकते हैं, चक्षु भी पालन करने में समर्थ है। इस प्रकार अन्य अन्य अङ्ग भी अन्य अन्य कार्यं करने में समर्थ हैं। इस लिए कहा गया है, सर्वतः पाणि पाद, सर्वतः नयन, मस्तक मुख इत्यादि। जगन्तीति" शब्द से प्रतीत होता है कि-लीला परिकरों में तो उन उन अङ्गों से उन उन कार्य को यथावत् करते हैं, व्यवहार में वैषम्य नहीं होता है। इस के प्रति कारण निर्देश करते हैं, श्रीविग्रह ही विलक्षण है, उनके श्रीविग्रह आनन्द चिन्मय, परमोज्ज्वल है, प्रकृति गन्धास्पृष्ट है ॥३२॥

अद्वैतमच्युतमनादिमनन्तरूप
माद्यं पुराणपुरुषं नवयौवनञ्च।
वेदेषुदुर्लभमदुर्लभमात्मभक्तौ
गोविन्दमादिपुरुषं तमहं भजामि ॥३३॥

---

वैलक्षण्यं व्यनक्ति अद्वैतं, अच्युतं अनादि, अनन्तरूपं आद्यं पुराणपुरुषं नवयौवनं च, वेदेषु दुर्लभं, आत्मभक्तौ अदुर्लभं तं आदिपुरुषं गोविन्दं अहं भजामि ॥३३॥

वैलक्षण्यमेव पुष्णाति—अद्वैतमिति त्रिभिः। अद्वैतं पृथिव्या मयमद्वैतो राजेतिवदतुल्यमित्यर्थः। विस्मापनं स्वस्य च" तृतीयस्थस्योद्धववाक्यात्। अच्युतं—न च्यवन्ते हि यद् भक्ताः महत्यां प्रलयापदि। अतोऽच्युतोऽखिले लोके स एकः सर्वगोऽव्ययः" इति काशीखण्डवचनात्, कंसो वताद्याकृतमेत्यनुग्रहं, द्रक्ष्येऽङ्घ्रिपद्मं प्रहितोऽमुना हरेः। कृतावतारस्य दुरत्ययं तमः पूर्वेऽतरन् यन्नख मण्डलत्विषा। यदर्च्चितं ब्रह्मभवादिभिः सुरैः श्रिया च" इत्यादि दशमस्थाक्रूरवाक्यात्। या वै श्रियार्च्चितमजादिभिराप्तकामै र्योगेश्वरैरपि यदात्मनि रासगोष्ठ्याम्। कृष्णस्य तद्भगवतः प्रपदारविन्दं

---

विलक्षणा का पोषण करने के लिए कहते हैं,—अद्वैतमिति तीन श्लोकों से।—अद्वैत शब्द से अतुलनीय जानना होगा, जिस पृथिवी में यह अद्वैत राजा है, कहने से बोध होता है, तृतीय स्कन्धस्थ उद्धव के वाक्य से बोध होता है कि आप स्वयं की सुभगता को देखकर स्वयं विस्मित होते थे। अच्युत शब्द का अर्थ है, जिन के भक्तों का पतन महत् प्रलय एवं विपत्ति से नहीं होताहै. एतन्निबन्धन अखिल लोक में एक सर्वग अव्यय को अच्युत कहते हैं, यह काशी खण्ड का विवरण है। अक्रूर ने कहा था, कंस ने आज मुझपर महान् अनुग्रह किया, इस से मैं श्रीहरि के चरण दर्शन कर सकूँगा, जिन के अवतार ग्रहण से नख कान्ति से पूर्वज मुनिगण तम को पार कर चूके थे। जिन चरणार विन्दों का अर्चन-ब्रह्म शिव देवगण

न्यस्तं स्तनेषु विजहुः परिरभ्य तापम्। इति श्रीमदुद्धव वाक्यात्। दर्शयामास लोकं स्वं गोपानां तमसः परम्" इत्युक्त्वा, नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृताः कृष्णञ्च तत्रच्छन्दोभिः स्तूयमानं सुविस्मिताः " इति श्रीशुकवाक्याच्च। अनादि मित्यादित्रयं यथैकादशसांख्यकथने, कालोमायामये जीव" इत्यादौ महाप्रलये सर्वाविशिष्टत्वेन ब्रह्मोपदिश्य तदापि तस्य द्रष्टृत्वं स्वयं भगवान् स्वस्मिन्नाह" एष सांख्यविधिः प्रोक्तः संशयग्रन्थिभेदनः। प्रतिलोमानुलोमाभ्यां परावरदृशा मया "इति" पुराण पुरुषं-एक स्त्वमात्मा पुरुषः पुराण इति ब्रह्म वाक्यात्, 'गूढ़ः पुराण पुरुषोवनचित्र माल्यः" इति माथुर वाक्याच्च। तथापि नवयौवनं—पुरापि नवः पुराण इति निरुक्तेः, गोप्यस्तपः किमचरन् यदमुष्यरूपम्" इत्यादौ। अनुसवाभिनवं इति दशमात्,। यस्याननं मकर कुण्डलादि नित्योत्सवमिति नवमात्। सत्यं शौचम् इत्यादौ" सोभग-कान्त्यादीन् पठित्वा "एते चान्येच भगवन्नित्या यत्र महागुणाः प्रार्थ्या

---

लक्ष्मी प्रभृति भी करते रहते हैं। आप्तकाम ब्रह्मादि देवगण, स्वयं लक्ष्मी, योगेश्वरगण, जिन चरणारविन्द की अर्च्चना करते रहते हैं, गोपीयों ने रास गोष्ठी में उन कृष्ण के उन चरणारविन्दों को वक्षोज के द्वारा परिरम्भणकर ताप शान्त किया था, यह वाक्य उद्धव जी का है। गोपों को प्रकृत्यतीत निज लोकों का दर्शन उन्होंने करवाया। इस के वाद में नन्दादि गोपगण श्रीकृष्ण प्रति देवों की अभ्यर्थना को देखकर आनन्दित तथा सुविस्मित भी हुये थे। यह श्रीशुक वचन है। अनादि विशेषणत्रय का विवरण एकादशस्कन्ध के सांख्य कथन प्रकरण में है। कालो मायामये जीवः इत्यादि में महाप्रलय में सब विशेष रूप में अपने का परिचय प्रदान ब्रह्मा को किया, उसका भी द्रष्टा स्वयं भगवान् हैं, उन्होंने कहा—संशय ग्रन्थि भेदन कारी सांख्य विधिका कथन मैंने किया, प्रतिलोम अनुलोम द्वारा वर्णन मैंने किया है, कारण कार्य को मैं ही जानता हूँ। पुराण पुरुष—ब्रह्माजीने कहा है, आप ही पुराण पुरुष एक आत्मा हो। माथुर

महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्" इति प्रथमात्" वृहद्-ध्यानादौ तथाश्रवणात्। गोपवेशमभ्राभं तरुणं कल्पद्रुमाश्रितम्' इति तापनीश्रुतौ; तद्ध्याने तरुणशब्दस्य "नवयौवन" एव शोभा विधानत्वेन तात्पर्य्यात्। वेदेषु दुर्लभं—भेजुर्मुकुन्द पदवीं श्रुतिभि र्विमृग्याम्' इति. अद्यापि यत्पदरजः श्रुतिमृग्यमेव" इति च श्रीदशमात्" अदुर्ल्लभमात्मभक्तौ—भक्त्याहमेकया ग्राह्यः' इत्येका-दशात्। पूरेह भूमन्। इत्यादि श्रीदशमाच्च ॥३३॥

यद्वा ननु तस्यातुल्यत्वे किमिति स्वार्थः। कथम्वातुल्यत्वं निजभक्तेभ्यः आत्मनो देहस्यापि प्रदानात्। किम्वावशिष्यत इत्याह—अच्युतमिति। निजभक्तेभ्य आत्मप्रदानादिनापि न विद्यते च्युति र्यस्य, सदैव एकरसमित्यर्थः। तर्हि किं नारायणं स्तौषि, तस्यैवाच्युतत्वादनादेश्च, नेत्याह—अनादिमिति न विद्यते आदिर्यस्य यस्माद्वा सर्वेषां परम कारणं स्वयन्तु स्वप्रकाशं कारण

---

जनों का वाक्य भी इस प्रकार है—गूढ़ पुराण पुरुष वनचित्र माल्य तथापि नव यौवन है-पुरापि नव पुराण यह पुराण शब्द का अर्थ है। श्रीदशम में उक्त है-इन्होंने कौन सी तपस्या की श्रीकृष्ण के रूपका दर्शन इन्होंने किया, वह रूप निरन्तर अभिनव है। नवम में भी यस्याननं मकरकुण्डलादि-नित्योत्सव रूप में कहा गया है, प्रथम स्कन्ध में सत्य शौच सौभग कान्ति प्रभृति का कथन के पश्चात् समस्त, महद् गुणों का आकर रूप में श्रीकृष्ण को कहा है। बृहद्धानादि में भी उस प्रकार वर्णन है। तापनी श्रुति में वर्णित है-गोपवेश अभ्राभ तरुण कल्पद्रूमाश्रित। उनके ध्यान में तरुण शब्द का नव यौवन अर्थ है। शोभा का आकर कथन में तात्पर्य्य है—वेद में दुर्लभ-श्रुतियों के अन्वेषणीय मुकुन्द पदवी को प्राप्त किया। श्रीदशम में उक्त है—अद्यापि जिनकी पदरजः का अन्वेषण करना श्रुतियों का काम्य ही है। आत्मभक्त के निकट वह अदुर्लभ है, एकादश में वर्णित है-में एकमात्र भक्ति से ही लभ्य हूँ। श्रीदशम में भी श्रीब्रह्मा जीने कहा--हे भूमन्! पूर्व काल में भी भक्ति के

शून्यमित्यर्थः। नन्वेकेन कथं सर्वेषां परिपालनं घटते इत्यत आह-अनन्तेति, अनन्तं रूपं यस्य, अथवा प्रपञ्चगतत्वेन नास्त्यन्तो यस्य, अथवा अनन्तस्य रूपं स्वरूपं यस्य, यस्मादेवांशेनानन्तादीनामुत्पत्तिः ननु नारायणादेवानन्तादि प्राकट्य प्रसिद्धिरित्याह आद्यं यस्य विलास रूपो नारायणस्तं। ननु ज्ञातं तस्यैव पुरुषाख्यानं, नेत्याह, पुराणेति यस्य विलास वपुः पुरुषाख्यस्तं नन्वायातं तस्य वृद्धत्वमित्याह-नवः यौवनमिति, कैशोरमित्यर्थः। 'च' कारात् य एव पुरातनः, स एव किशोरवया इत्यनिर्वचनत्वं नित्यत्वञ्च। ननु वेदेषु नारायण एव गीयते इत्याह, वेदेष्विति, वेदैस्तत्त्वं ज्ञायते चेत् तेषु सुलभमित्यर्थः" भक्तिविना न ज्ञायते इत्याह अदुर्लभमिति ॥३३

---

द्वारा आप के चरणार विन्दों का लाभ भक्तवर्ग ने किया है ॥३३॥

यद्वा—उनका अतुल्य होने में स्वार्थ क्या है? अतुल्य भी कैसे हो हे सकते हैं? निज भक्त को निज देह प्रदान भी कर देते हैं। अवशेष ही क्या रह जाता है, अतः कहते हैं अच्युत,-निजभक्त को आत्म प्रदान से भी हानि नहीं होती है-सदा एकरस रहते हैं। तव क्या नारायण का स्तव करते हो? वह अच्युत है अनादि भी है, अनादि-जिनकी आदि नहीं है जिस से आदि और कोई नहीं है, सव के परम कारण हैं, स्वयं स्वप्रकाश हैं कारण शून्य हैं। एक से सवका परिपालन कैसे हो सकता हैं? कहते है-अनन्त हैं,-जिनके रूप अनन्त हैं, प्रपञ्चगत होने से जिन का अन्त नहीं है, अथवा जो अनन्त का स्वरूप है। जिन के अंश से ही अनन्तादि की उत्पत्ति है। प्रसिद्धि ही है कि-नारायण से अनन्तादि का प्राकट्य है। कहते हैं आद्य,-जिनका विलास रूप नारायण है। पुरुष नाम तो उनका ही है? नहीं, पुराण है, जिनका विलास वपुः पुरुष संज्ञक है। तव तो आप वृद्ध हैं?--नहीं, नव यौवन है, किशोर है। च कार से जो पुरातन है वह ही किशोर वयस के हैं, इस से अनिर्वचनीयत्व एवं नित्यत्व आप के हैं। वेद से तत्त्व ज्ञान होने से वह सुलभ है, भक्ति के विना उनका ज्ञान नहीं होता है-अतः वह अदुर्लभ हैं ॥३३॥

पन्थास्तु कोटिशतवत्सरसंप्रगम्यो
वायोरथापि मनसो मुनिपुङ्गवानां।
सोऽप्यस्ति यत् प्रपदसीम्न्यविचिन्त्यतत्त्वे
गोविन्दमादिपुरुषं तमहं भजामि ॥३४॥

---

वायोः अथापि मुनिपुङ्गवानां मनसः कोटिशतवत्सर संप्रगम्यः सः पन्था तु यत् प्रपदसीम्न्यविचिन्ततत्त्वे अपि अस्ति तं आदि पुरुषं गोविन्दं अहं भजामि ॥२४॥

पन्थास्त्विति, प्रपदसीम्नि चरणारविन्दयोरग्रे,—चित्रं वतैतदेकेन वपुषा युगपत् पृथक्। गृहेषुद्वयष्टसाहस्रं स्त्रिय एक उदावहत् इति श्रीनारदोक्तेः। एकः वशी सर्वगः कृष्ण ईड्य एकोऽपि सन् वहुधा योऽत्रभाति" इति गोपालतापन्याम्। तत्र सिद्धान्तमाह-अविचिन्त्यतत्त्वे "इति, "आत्मश्वरोऽतर्क्यसहस्रशक्तिः इति तृतीयात्। अचिन्त्य खलु ये भावा न तांस्तर्केन योजयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्। इति स्कान्दाद्भारताच्च, श्रुतेस्तुः शब्दमूलत्वात्" इति ब्रह्मसूत्रात्। अचिन्त्यो हि मणिमन्त्र महौषधीनां प्रभावः" इति भाष्ययुक्तेश्चेति भावः ॥३४॥

---

श्रीनारद जीके कथनानुसार-आश्चर्य यह है कि एक शरीर से ही युगपद् द्वयष्ट साहस्र गृह में परिणयोत्सव सम्पन्न किया। कृष्ण अद्वय है, वशी, सर्वग, ईड्य, एक होकर भी अनेक प्रकार से प्रतिभात होते हैं, यह श्रीगोपाल तापनी का विवरण है, उस में सिद्धान्त कहते हैं। अविचिन्त्यतत्त्व है, आत्मेश्वरअतर्क्य सहस्र शक्ति है। यह वर्णन तृतीय स्कन्ध में है। अचिन्त्य भाव पदार्थ को मनुष्य मति से जानने की इच्छा न करे। जो प्रकृति से अतीत है, वह ही अचिन्त्य है। यह प्रमाण स्कन्द पुराण एवं भारत में है। ब्रह्म सूत्रका कथन है शास्त्र से तत्त्व को जानो। भाष्य की युक्ति है कि-मणि मन्त्र महौषधि का प्रभाव लोक बुद्धि का अगोचर होता है ॥३४॥

सर्वापेक्षा अधिक वेगशाली वायु एवं मुनिगण के समाहित मन

एकोऽप्यसौ रचयितुं जगदण्डकोटिम्
यच्छक्तिरस्ति जगदण्डचया यदन्तः।
अण्डान्तरस्थपरमाणुचयान्तरस्थम्
गोविन्दमादिपुरुषं तमहं भजामि ॥३५॥

---

असौ एकः अपि जगदण्डकोटिं रचयितुं यच्छक्तिः अस्ति। यदन्तः जगदण्डचयाः वर्त्तन्ते, अण्डान्तरस्थपरमाणुचयान्तरस्थं तं आदि पुरुषं गोविन्दं अहं भजामि ॥३५॥

अचिन्त्यशक्तिमाह—एकोऽप्यसाविति। तावत् सर्वे वत्स पालाः पश्यतोऽजस्य तत्क्षणात्। व्यदृश्यन्त घनश्यामाः पीतकौशेय वाससः'' इत्यारभ्य तैः वत्सपालादिभिरेवानन्तब्रह्माण्डसामग्रीयुत तत्तधिपुरुषाणां तेनाविर्भावनात्। जगदण्डचय।' इति'' नचान्त नं वहिर्यस्य इत्यादेः अणोरणोयान्महतो महीयान्'' इत्यादि श्रुतेः, योऽसौ सर्वेषु भूतेषु आविश्य भूतानि विदधाति स वो हि स्वामी भवति। योऽसौ सर्वभूतात्मा गोपालः, एकोदेवः सर्वभूतेषु गूढः'' इत्यादि तापनीभ्यः ॥३५॥

---

है, शत कोटि वत्सर वह गमन कर भी जिनके चरणारविन्द की सीमा को स्पर्श कर नहीं पाता है, उन आदि पुरुष गोविन्द का मैं भजन करता हूँ ॥३४॥

अचिन्त्य शक्ति का वर्णन करते हैं, वह एक है तो भी ब्रह्माके देखते देखते ही वत्सपालगण घनश्याम वर्ण एवं पीत कौशेय वसन धारी हो गये। इस से आरम्भ कर वत्सपालादि के द्वारा ही अनन्त ब्रह्माण्ड की सामग्रीयुक्त उन उन के अधिपुरुषों का आविर्भाव कराया है, जगदण्ड निकर, को दिखाते हैं। जिनका अन्तर तथा बाहर नहीं हैं, जो अणु से भी अणु है, महत् से भी महान् है, जो समस्त भूतों में प्रविष्ट होकर भूतों का नियमन करते हैं, वह ही तुम्हारे स्वामी है, जो वह सर्वभूतात्मा गोपाल है एक है देव है, और समस्त भूतों में निगूढ़ रूप में रहते हैं। यह सव तापनीं से व्यक्त हुये हैं। जो मूर्त्त-

यद्भावभावितधियो मनुजास्तथैव
संप्राप्यरूपमहिमासनयानभूषाः ।
सूक्तैर्यमेव निगमप्रथितैः स्तुवन्ति ।
गोविन्दमादिपुरुषं तमहं भजामि ॥३६॥

---

मनुजाः यद्भावभावितधियः तथैव संप्राप्यरूप महिमासन यान भूषाः, निगमप्रथितैः सूक्तैः यमेव स्तुवन्ति तं आदि पुरुषं गोविन्दं अहं भजामि ॥३६॥

अथ तस्य साधकचर्येष्वपि भक्तेषु वदान्यत्वं वदन्नित्येषु कैमुत्यमाह–यद् भावेति । यथा समान गुणशीलवयोविलास वेशैश्चेत्यागमरीत्या नित्यतत्सङ्गिनां तत् साम्यं श्रूयते, तथैव संभाव्येत्यर्थः "वैरेण यं नृपतय शिशुपालशाल्वपौण्ड्रादयो गति–

---

स्वरूप में एक होकर भी अनन्त कोटि ब्रह्माण्ड रचना करने की शक्ति सम्पन्न है, सुतरां ब्रह्माण्ड समूह सूक्ष्म रूपमें जिनके मध्यमें अवस्थित है, अथच सर्वव्यापक रूप में ब्रह्माण्ड के अभ्यन्तरस्थ सूक्ष्म परमाणु समूह में भी जिनकी व्याप्ति है, उन आदि पुरुष गोविन्द का में भजन करता हूँ ॥३५॥

अनन्तर साधक गणों के प्रति उनकी वदान्यता कथन के द्वारा नित्यपरिकरों के स्वभाव को कहते हैं, आगम में वर्णितहै, श्रीगोविन्द के परिकर गण उनके समान गुण शील वयस विलास वेश युक्त हैं, उस प्रकार साधक गण भावना के द्वारा गुणशीलवयस विलाश वेश के द्वारा समान होते हैं, एकादश स्कन्ध में वर्णित है–राजन्य वर्ग वैरता से तन्मयता को प्राप्त किये थे, जैसे शिशु पाल शाल्व पौण्ड्र प्रभृति थे, मनुष्य बुद्धि से गति विलास विलोकन प्रभृति में शयनासन प्रभृति में, श्रीकृष्ण में तन्मयता प्राप्त करते हैं, जो लोक प्रवल प्रेममयी तृष्णा से श्रीकृष्ण में तन्मयता को प्राप्त करते हैं, उनके लिए विशेष कहना क्या है ? जिन के नाम, रूप, गुण लीलादि चिन्तन कर मनुष्य गण के चित्त तन्मय हो जाता है, उस से उनसव की

आनन्दचिन्मयरसप्रतिभाविताभि
स्ताभिर्य एव निजरूपतया कलाभिः ।।
गोलोक एव निवसत्यखिलात्मभूतो
गोविन्दमादिपुरुषं तमहं भजामि ।।३७।।

---

विलास विलोकनाद्यैः ध्यायन्त आकृतिधियः शायनासनादौ तद्भाव मापुरनुरक्तधियां पुनः किम्" इत्येकादशात् ।।३६।।

अखिलात्मभूतः यः आनन्दचिन्मयरसप्रतिभाविताभिः निजरूपतया कलाभिः ताभिः एव गोलोक एव निवसति तं आदि पुरुषं गोविन्दं अहं भजामि ।।३७।।

तत् प्रेयसीनां तु किं वक्तव्यं, यतः परम श्रीणां तासां साहित्येनैव तस्य तल्लोके वास इत्याह-आनन्देति अखिलानां गोलोकवासिनां अन्येषामपि प्रियवर्गानां आत्मभूतः परम प्रेष्ठतयात्मवदव्यभिचार्य्यपि ताभिरेव सह निवसतीति तासामतिशयित्वं दर्शितम् अत्र हेतुः-कलाभिः ह्लादिनीशक्तिवृत्तिरूपाभिः। अत्रापि वैशिष्टयमाह,--

---

सारूप्य मुक्ति भी होती है, उससे तुल्य रूप, महिमा, आसन, यान, भूषणादि का लाभ होता है. उन आदि पुरुष गोविन्द का मैं भजन करता हूँ ।।३६।।

उनकी प्रेयसीवर्ग की तन्मयता से जो एकात्मभाव है, उसका कहना ही क्या है, परम श्रीवर्ग के साहित्य से ही श्रीगोविन्द का गोलोक में अवस्थान सम्भव हुआ है। आनन्द शब्द से उस को कहते हैं, अखिल गोलोक वासियों के और अन्य प्रियवर्गो के आत्मभूत-परमप्रेष्ठता हेतु आत्मवत् नित्य प्रिय होनेपर भी उन सब प्रेयसीयों के साथ ही निवास करते हैं, इस से प्रीति में वे सब सर्वाधिक हैं. यह सूचित हुआ। इस में हेतु है—वे सब ह्लादिनी शक्ति की वृत्ति रूपा हैं। इस में भी वैशिष्ट्य है,-आनन्द चिन्मय जो रस, परम प्रेममय उज्ज्वल नामक रस, उस से प्रति भावित है, अर्थात् श्रीकृष्ण ने प्रीति के द्वारा जिन सब को विभोर किया था, उन प्रीतिसिक्त

आनन्द चिन्मयो यो रस: परमप्रेममय उज्ज्वल नामा तेन प्रति भाविताभि:—पूर्वं तावत्तासां तन्नाम्ना रसेन सोऽयं भावितो वासितो जात:, ततश्च, तेन या: प्रतिभाविता जाता: ताभि: सहेत्यर्थ:, प्रतिशब्दा ल्लभ्यते। यथा प्रत्युपकृत: स' इत्युक्ते:, तस्य प्रागुपकारित्वमायाति तद्वत् तत्रापि निजरूपतया स्वदारत्वेनैव नतु प्रकट लीलावत् पर-दारत्वव्यवहारेणेत्यर्थ:। परमलक्ष्मीणां तासां तत्परदारत्वा सम्भवादस्य स्वदारत्वमयरसस्य कौतुकावगुण्ठिततया समुत्कण्ठा पोषणार्थ प्रकट लीलायां माययैव तादृशत्वं व्यञ्जितमिति भाव:। य एव इत्येव कारेण यत् प्रापञ्चिकप्रकटलीलायां तासु परदारता व्यवहारेण निवसति सोऽयं य एव तदप्रकट लीलास्पदे गोलोके निज रूपताव्यवहारेण निवसतीति व्यज्यते। तथाच व्याख्यातं गौतमीय तन्त्रे तदप्रकटनित्यलीलाशीलनदशार्णवव्याख्याने—अनेक जन्म सिद्धानां" इत्यादौ दर्शितमेव। गोलोक एवेत्येव कारेण सेयं लीलातु क्वापि नान्यत्र विद्यते इति प्रकाश्यते ॥३७॥

---

हृदयों से ही उन सबने प्रीति किया, उन सब के साथ ही आप निवास करते हैं, यह अर्थ प्रति शब्द से प्राप्त हुआ है, जिस प्रकार प्रत्युपकृत: स:" कहने से उसने पहले उपकार किया था, पश्चात् उस से उनको उपकार मिला है, अर्थ बोध होता है। उस प्रकार प्रतिभावितशब्द का अर्थ जानना होगा। उस में भी स्वदाररूप से ही व्यवहार करते हैं, किन्तु गोकुल में प्रकट होकर जिस प्रकार परदार रूप से व्यवहार किए थे उस प्रकार नहीं। प्रियावर्ग परम लक्ष्मीगण हैं, उन कृष्ण प्रियावर्ग का पर दारत्व होना सम्भव नहीं है, किन्तु निज पत्नी कौतुक से अवगुण्ठित होकर निज पति को विशेष उत्कण्ठित करती रहती है, उस प्रकार वृन्दावनीय प्रकट लीला में उत्कण्ठा वृद्धि के लिए योगमाया से ही उक्त परकीया सम्बन्ध की प्रतीति हुई थी। य एव, यहाँएवकार से यह अर्थ आता है, कि भौम वृन्दावन में प्रकट काल में परकीय परदार व्यवहार से वे सब रहती हैं, वह ही अप्रकट लीलास्पद रूप गोलोक में निज दार व्यवहार से निवास

प्रेमाञ्जनच्छुरितभक्तिविलोचनेन ।
सन्तः सदैव हृदयेषु विलोकयन्ति ।
यं श्यामसुन्दरमचिन्त्यगुणस्वरूपं
गोविन्दमादिपुरुषं तमहं भजामि ॥३८॥

सन्तः प्रेमाञ्जनच्छुरितभक्तिविलोचनेन हृदयेषु यं अचिन्त्य गुणस्वरूपं श्यामसुन्दरं सदा एव विलोकयन्ति तं आदि पुरुषं गोविन्दं अहं भजामि ॥३८॥

यद्यपि गोलोक एव निवसति तथापि प्रेमाञ्जनेति अचिन्त्य गुणस्वरूपमपि प्रेमाख्यं यदञ्जनच्छुरितवदुच्चैः प्रकाशमानं भक्ति रूप विलोचनं तेनेत्यर्थः। तेन प्रतिबिम्बवद् दूरादप्युदितं हृदये

करते हैं, यह ध्वनित हुआ। गौतमीय तन्त्र के अप्रकट नित्यलीला शीलन दशाक्षर मन्त्र की व्याख्या में कथित है, अनेक जन्म सिद्ध गोपीयों के पति है। गोलोक के वाद "एव" कार से यह अर्थ आता है, कि स्वदारत्व लीला केवल गोलोक में ही है, अन्यत्र गोकुल वृन्दावन में नहीं है, गोलोक गोकुल का ऐश्वर्य प्रधान स्थान है। उस प्रकार प्रेयसी वर्ग के साथ गोलोक में जो निवास करते हैं, उन आदि पुरुष गोविन्द का भजन मैं करता हूँ।

यद्यपि गोविन्द गोलोक नामक श्रीवृन्दावनीय वैभव स्थली में निवास करते हैं, तथापि प्रेमाञ्जनच्छुरित भक्ति विलोचन द्वारा दृष्ट होते हैं, अचिन्त्य गुण स्वरूप होने परभी प्रेमनामक जो अञ्जन है, जिस से नेत्र का मालिन्य विदूरित होकर नेत्रज्योति अतिशय प्रकाशित होतीहै, और वस्तु सुष्ठु रूप से दिखाई देतीहै, उस प्रकार भक्ति विलोचन से श्रीगोविन्द दृष्ट होते हैं, ममत्व युक्त परिचर्य्या से श्रीगोविन्द वशीभूत होकर सदा समीप में रहते हैं। सूर्य दूरस्थित होनेपर भी स्वच्छ जल में उसका प्रतिविम्ब दृष्ट होता है, उस प्रकार मर्त्य लोक से गोलोक दूरस्थित होनेपर भी अन्य ममताशून्य ममता युक्त परिचर्य्या से अन्तः करण निर्मल होता है, और वह प्रतिविम्ब

रामादि मूर्त्तिषु कला नियमेन तिष्ठन्
नानावतारमकरोद् भुवनेषु किन्तु ।
कृष्णः स्वयं समभवत् परमः पुमान् यो
गोविन्दमादिपुरुषं तमहं भजामि ॥३६॥

---

मनस्यपि पश्यन्तीत्यर्थः। भक्तिरत्र समाधिः। तदुक्तं श्रीगीतासु-ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमिति ॥३८॥

यः कृष्णः परमः पुमान् कलानियमेन रामादिमूर्त्तिषु तिष्ठन् भुवनेषु नाना अवतारं अकरोत् किन्तु यः परमः पुमान् कृष्णः स्वयं समभवत्-अवततार, तं आदि पुरुषं गोविन्दं अहं भजामि ॥३९॥

स एव कदाचित् प्रपञ्चे निजांशेन स्वयमवतरतीत्याह रामादीति यः कृष्णाख्यः परमः पुमान् कलानियमेन तत्र तत्र नियतानामेव शक्तीनां प्रकाशेन रामादिमूर्त्तिषु तिष्ठन् तत्तन्मूर्त्तीः प्रकाशयन्

---

के समान मन एवं हृदय में सदा दृष्ट होते हैं, यहाँपर भक्ति शब्द का अर्थ समाधि है। मनकी सम्यक् एकाग्रता। श्रीगीता में उक्त विषय का उल्लेख सुस्पष्ट रूप में है, भक्ति पूर्वक जो भी मेरी परिचर्य्या करताहै, वह मेरे में रहताहै, और में उन में रहताहूँ। अर्थात् श्रीगोविन्द गोलोक में निवास करने पर भी प्रेमरूप अञ्जन से समुज्ज्वल भक्ति रूप विशिष्ट लोचन के द्वारा साधुभक्तगण, जिन अचिन्त्य विविध सद्‌गुण विभूषित श्रीश्यामसुन्दर को निज हृदय में सर्वदा अवलोकन करते रहते हैं उन आदि पुरुष गोविन्द का मैं भजन करता हूँ ॥३८॥

वह श्रीगोविन्द कदाचित् भूमण्डल में निजांश के साथ स्वयं अवतीर्ण होते हैं, रामादि मूर्त्ति के द्वारा अवतीर्ण होते हैं। जो कृष्ण नामक परम पुरुष कला नियम से उन उन अवतारों में तत् कालोप योगी शक्ति प्रकाशन द्वारा रामादि मूर्त्तिमें स्थित होकर अर्थात् उन उन मूर्त्ति को प्रकट कर भुवन में अनेक कार्य करने के लिए अवतीर्ण होते हैं, किन्तु जो स्वयं ही कृष्ण रूप परम पुमान् अवतीर्ण

यस्य प्रभा प्रभवतो जगदण्डकोटि
कोटिष्वशेषवसुधादिविभूतिभिन्नम् ॥

नानावतारमकरोत् । य एव स्वयं समभवदवततार। तं लीला विशेषेण गोविन्दं सन्तमहं भजामीत्यर्थः। तदुक्तं श्रीदशमे देवैः- मत्स्याश्वकच्छपवराहनृसिंहहंसराजन्यविप्रविबुधेषु कृतावतारः त्वं पासि नस्त्रिभुवनञ्च यथाधुनेश भारं भुवो हर यदूत्तम वन्दनं ते" इति ॥३९॥

जगदण्ड, कोटिषु अशेषवसुधादिविभूतिभिन्नं निष्कलं अनन्तं अशेष भूतं, तद्ब्रह्म, यस्य प्रभवतः प्रभा भवति, तं आदि पुरुषं गोविन्दं अहं भजामि ॥४०॥

तदेवं तस्य सर्वावतारित्वेन पूर्णत्वमुक्त्वा स्वरूपेणाप्याह यस्येति। द्वयोरेकरूपत्वेऽपि विशिष्टतयाविर्भावात् श्रीगोविन्दस्य धर्म्मिरूपत्वमविशिष्टतयाविर्भावात् ब्रह्मणो धर्मरूपत्वं ततः पूर्वस्य मण्डलस्थानीयत्वमितिभावः। तत्र विष्णुपुराणमपि संप्रवदते "शुभाश्रयः सचित्तस्य सर्वगस्य तथात्मनः। इति। व्याख्यातश्च श्रीधर स्वामिभिः "सर्वगस्यात्मनः पर ब्रह्मणो अप्याश्रयः प्रतिष्ठा"

---

होते हैं। लीला विशेष में स्थित उन श्रीगोविन्द का मैं भजन करता हूँ, यह अर्थ है, श्रीदशम में देवों ने कहा भी है। मत्स्य, अश्व, कच्छप, वराह, नृसिंह, हंस, राजन्य, विप्र, विबुध रूप धारण कर आप अवतार ग्रहण किए थे। हे ईश! हे यदूत्तम! आप रक्षक हो, त्रिभुवन की रक्षा जिस प्रकार आप ही करते हो, अधुना उस प्रकार ही भुवन का भार को हरण करो, आपको प्रणाम करता हूँ ॥३९॥

इस के पूर्व में सर्वावतारि रूप में श्रीकृष्ण की पूर्णता प्रति पादन कर सम्प्रति स्वरूप से भी पूर्णत्व प्रति पादन करते हैं, तत्त्व में श्रीगोविन्द एवं ब्रह्म एक होने से भी शक्ति शक्तिमत्स्वरूप विशेषण विशिष्ट होकर आविर्भूत होने से श्रीगोविन्द धर्मिरूप हैं, अविशिष्ट रूप में आविर्भूत होने से ब्रह्म धर्म रूप है। अतएव श्रीगोविन्द का मण्डल स्थानीयत्व है, इसमें विष्णु पुराणका संवाद इस

तद्ब्रह्म निष्कलमनन्तमशेषभूतम्
गोविन्दमादिपुरुषं तमहं भजामि ॥४०॥

तदुक्तं भगवता—ब्रह्मणोऽहि प्रतिष्ठाहमिति । अतएवैकादशे स्व विभूति गणनायां तदपि स्वयं गणितं--पृथिवीवायुराकाश आपोज्योतिरहं महान् । विकारः पुरुषो व्यक्तं रजः सत्त्वं तमः परम्" इति । टीका चात्र "परं ब्रह्म चेत्येषा श्रीमत्स्यदेवेनाप्यष्टमे तथोक्तं-मदीयं महिमानञ्च परं ब्रह्मेति शब्दितम् ।" अतएव श्रीयामुनाचार्यचरणैरपि, " यदण्डमण्डान्तरगोचरं च यत् दशोत्तराण्यावरणानि यानि च, गुणाः प्रधानं पुरुषं परं पदं परात्परं ब्रह्म च ते विभूतयः" इति । अतएवाह ध्रुवश्चतुर्थे, "या निर्वृतिस्तनुभृतां तव पादपद्मध्यानाद् भवज्जनकथाश्रवणेन वा स्यात् । सा ब्रह्मणि स्वमहिमन्यपि नाथ माभूत् किम्वन्तकासिलुलितात् पततां विमानात्" । अतएवात्मारामाणामपि तद् गुणेनाकर्षः श्रूयते । आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतो गुणो हरिः । इति । अत्र विशेषजिज्ञासा चेत् श्रीभागवत सन्दर्भो द्रश्यतामित्यलमति विस्तरेण ॥४०॥

प्रकार है, सच्चित्तका सर्व व्यापक का आत्मा का शुभाश्रय है, श्रीधर स्वामिपादने इस व्याख्या इस प्रकार की है। सर्वग आत्मा का पर ब्रह्म का भी आश्रय प्रतिष्ठा है, श्रीभगवान् ने भी कहा है-मैं ब्रह्म की प्रतिष्ठा हूँ। अतएव एकादश स्कन्ध में स्व विभूति गणना में उस की गणना स्वयं की है, पृथिवी, वायु, आकाश, जल, ज्योति अहंकार महत्तत्त्व, विकार पुरुष व्यक्त रजः सत्त्व तमः परम्" टीका यहाँ की पर-ब्रह्म। श्रीमत्स्यदेवने भी अष्टम में कहा है, मेरी महिमा को पर ब्रह्म कहते हैं, अतएव श्रीयामुनाचार्य चरण ने भी कहा है, अण्ड अण्डान्तर गोचर, दशोत्तर आवरण समूह, गुण समूह प्रधान पुरुष, परपद, परात्पर ब्रह्म,-आपकी विभूति है, अतएव चतुर्थस्कन्ध में ध्रुवने भी कहा है, आप के चरणाविन्द का ध्यान में एवं आप के

**माया हि यस्य जगदण्डशतानि सूते**
**त्रैगुण्यतद्विषयवेदवितायमाना ।**

यस्य त्रैगुण्य तद्विषयवेदवितायमाना माया हि जगदण्डशतानि सूते, सत्त्वावलम्बिपरसत्त्वविशुद्धसत्त्वं आदि पुरुषं तं गोविन्दं अहं भजामि ॥४१॥

तदेवं तस्य स्वरूपगतमाहात्म्यं दर्शयित्वा जगद्गत माहात्म्यं दर्शयति द्वाभ्यां । तत्र वहिरङ्गशक्तिमायाचिन्त्यकार्यगतमाह माया हीति । मायया हि तस्य स्पर्शो नास्तीत्याह—सत्त्वेति, सत्त्वस्य रजस्तमो मिश्रस्याश्रयि यत् परं तदमिश्रं शुद्धं सत्त्वं, तस्मादपि विशुद्धं चिच्छक्तिवृत्तिरूपं सत्त्वं यस्य तं । तथोक्तं श्रीविष्णु पुराणे सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । स शुद्ध सर्वशुद्धेभ्यः

जनों के चरित्र श्रवण से जो आनन्द होता है, वह आनन्द, आपकी महिमा रूप ब्रह्म चिन्तन में नहीं है, और जो काल कवलित साम्राज्यादि है उस में जो आनन्द है, वह कहने के योग्य ही है। अतएव आत्मारामगण उनमें आकृष्ट होते हैं, आत्माराम निर्ग्रन्थ मुनिगण भी उरुक्रम श्रीहरि में अहैतुकी भक्ति करते हैं, श्रीहरि उस प्रकार गुणविशिष्ट हैं। इस विषय में विशेष जिज्ञासा हो तो भागवत सन्दर्भ देखें। कोटि कोटि ब्रह्माण्ड के मध्य में पृथिव्यादि रूप जो सब विभूति हैं उस से भिन्न विभूति रूप निष्कल-अर्थात् निरुपाधि, अनन्त अशेष प्रकार से अवस्थित ब्रह्म भी जिन प्रभाव शाली गोविन्द की अङ्ग कान्ति है, उन आदि पुरुष श्रीगोविन्द का मैं भजन करता हूँ ॥४०॥

श्रीगोविन्द का स्वरूपानुबन्धि विशुद्ध सत्त्वका माहात्म्य को दिखाकर जगद् गत माहात्म्य को कहकर स्तव करते हैं, दो श्लोकों के द्वारा उस का वर्णन करेंगे। उस में से वहिरङ्ग शक्ति माया का अचिन्त्य कार्य्य विवरण को कहते हैं, जिन की माया शक्ति अनन्त ब्रह्माण्ड का सृजन करती है किन्तु उस माया शक्ति के साथ श्री-

सत्त्वावलम्बिपरसत्त्वविशुद्धसत्त्वम् ।
गोविन्दमादि पुरुषं तमहं भजामि ।।४१।।
आनन्दचिन्मयरसात्मतया मनःसु
यः प्राणिनां प्रतिफलन् स्मरतामुपेत्य ।

---

पुमानाद्यः प्रसीदतु । ह्लादिनी सन्धिनी सम्वित् त्वय्येका सर्व संश्रये ह्लादतापकरी मिश्रात्वयि नो गुणवर्ज्जिते" इति । विशेषतः श्रीभागवतसन्दर्भे तदिदमपि विवृतमस्ति ।।४१।।

यः प्राणिनां मनःसु आनन्दचिन्मयरसात्मतया प्रतिफलन् स्मरतामुपेत्य भुवनानि लीलायितेन अजस्रम् जयति तं आदि पुरुषं गोविन्दं अहं भजामि ।।४२।।

---

गोविन्द का स्पर्श नहीं है, आप विशुद्ध सत्त्व में विराजित हैं, विशुद्ध सत्त्व को समझाते हैं, सत्त्व रज, तमात्मिका माया, गुणत्रय अन्योन्य मिलित रहता है, रजः तमो गुण से असंयुक्त-सत्त्व को शुद्ध सत्त्व कहते हैं, उससे भी विशुद्ध सत्त्व को चिच्छक्ति कहते हैं, वह सत्त्व मायिक सत्त्व नहीं है, किन्तु चिच्छक्ति वृत्ति रूप विशुद्ध सत्त्व है, उन विशुद्ध सत्त्व रूप श्रीहरि की मूर्त्ति है, उन श्रीगोविन्द का मैं भजन करताहूँ । श्रीविष्णु पुराण में उक्तहै, भगवान् में प्राकृत सत्त्व रजः तमः गुण नहीं है, वह समस्त शुद्ध गुणों से शुद्ध हैं, उन आद्य पुरुष प्रसन्न हो, सर्वाश्रय आप में ही ह्लादिनी सन्धिनी सम्वित् शक्ति है, जीवमें वह शक्ति नहीं, प्राकृत ह्लाद, रज,तमः मिश्रितगुण ईश्वर स्वरूप आपमें नहीं है, किन्तु जीव में है । इसका विशेष विवेचन श्री-भागवत सन्दर्भ मेंहै, अतः जिनकी वहिरङ्गात्रिगुणात्मिका माया शत शत ब्रह्माण्ड की रचना करतीहै, उसका वर्णन त्रैगुण्य विषयक वेद में सुविस्तृत वर्णनहै, किन्तु माया के साथ श्रीहरि के स्वरूप का संस्पर्श नहीं है, उनका स्वरूप सत्त्व रज तमशून्य विशुद्ध चिच्छक्तिमय है, उन आदि पुरुष गोविन्द का मैं भजन करता हूँ ।।४१।।

अनन्तर उज्ज्वल प्रेममय मोहनता को कहते हैं,—आनन्द

**लीलायितेन भुवनानि जयत्यजस्रम् ।**
**गोविन्दमादिपुरुषं तमहं भजामि ।।४२।।**

---

अथ तन्मयमोहनत्वमाह-आनन्देति । आनन्दचिन्मयरस उज्ज्वलाख्यः प्रेमरसः, तदात्मतया तदालिङ्गिततया प्राणिनां मनःसु प्रतिफलन्-सर्वमोहनस्वांशच्छुरितपरमाणुप्रतिविम्बतथाकिञ्चिदुदयन्नपि स्मरतामुपेत्येत्यादि योज्यम् । यदुक्तं रासपञ्चाध्याय्याम्-साक्षान्मन्मथ मन्मथ'' इति ''चक्षुषश्चक्षुः ''इतिवत्; तदेवं तत्कारणत्वेऽपि स्मरावेशस्य दुष्टत्वं जगदावेशवत् ।।४२।।

---

चिन्मय रसात्मरूप मे प्राणि निवह के मन में प्रतिफलित होकर त्रिभुवन को वशीभूत करते रहते हैं, अर्थात् जो उज्ज्वलाख्य प्रेम रस से विभावित है, एवं उस परम मोहन स्वरूप के किञ्चित् अंश से प्राणि निवह के अन्तः करण में प्रति फलित होकर अर्थात् प्रतिबिम्व रूप आभास के द्वारा कन्दर्प स्वरूप को प्रकट कर लीला से निरन्तर त्रिभुवन को जय करते रहतेहैं, तज्जन्य जिनको साक्षात् मन्मथमन्मथ रूपमें श्रीमद्‌भागवतके रासपञ्चाध्यायमें उल्लेख किया गयाहै । यहाँ ज्ञातव्य विषय यह है कि-जिस प्रकार भगवान् से जगत् उत्पन्न होने पर भी उस जगत् के विषय में भोक्ताभोग्य रूप में आवेश भगवत् भजन में विध्नस्वरूप है, तद्रूप कन्दर्प,—भगवान् के अंश प्रतिफलित स्वरूप होने पर भी उस का आवेश अत्यन्त दोषावह है, उन आदि पुरुष गोविन्द का मैं भजन करता हूँ । आनन्दचिन्मय रस शब्द से उज्ज्वलाख्य प्रेमरस को जानना होगा, उसका ही प्रतिशब्द है, तदात्मतया,—उस से आलिङ्गित होकर, प्राणियों के मन समूह में-अन्तः करण की सङ्कल्प विकल्पात्मक वृत्ति में, प्रतिफलन—प्रति विम्वित होकर अर्थात् सर्वमोहतस्वांश समग्रपदार्थ मोहन कारी चिन्मयप्रेमरस का अंश च्छुरित परमाणु प्रतिविम्वतया, अंश मात्र से प्रकाशित परमाणु के प्रतिविम्व रूप से, किञ्चिदुदयन्नपि, स्वल्प आभास मात्र उदित होकर भी, स्मरतामपेत्येत्यादियोज्यम्, प्राकृत

गोलोकनाम्नि निजधाम्नि तले च तस्य
देवी महेश हरिधामसु तेषु तेषु ।

तस्य गोलोकनाम्नि तले च देवी महेश हरिधामसु तेषु तेषु येन ते ते प्रभावनिचया विहिताश्च तं आदि पुरुषं गोविन्दं अहं भजामि ।।४३।।

तदिदं प्रपञ्चगतं माहात्म्यमुक्त्वा निजधामगतमाहात्म्यमाह-गोलोकेति । देवीमहेशेत्यादि गणनं व्युत्क्रमेण ज्ञेयम् । देव्यादीनां यथोत्तरमूर्द्धोर्द्ध प्रभवत्वात्तल्लोकानामूर्द्धोर्द्ध भावित्वमिति । गोलोकस्य सर्वोर्द्धगामित्वं व्यापकत्वञ्च व्यवस्थापितमस्ति, भुवि प्रकाशमानस्य वृन्दावनस्य तु तेनाभेदः पूर्वत्र दर्शितः । "स तु लोकस्त्वया कृष्ण सीदमानः कृतात्मना । धृतोधृतिमतावीर निघ्नतोपद्रवान्गवाम्" इत्यनेनाभेदेनैव हि गोलोक एव निवसतीत्येवकारः संघटते । यतो भुवि प्रकाशमानेस्मिन् वृन्दावनेऽपि तस्य नित्यविहारित्वं श्रूयते । यथा आदि वाराहे-वृन्दावनं द्वादशमं वृन्दया परिरक्षितम् । हरिणा-धिष्ठितं तच्च ब्रह्मरुद्रादिसेवितम् । तत्र च विशेषः, कृष्ण क्रीड़ासेतु-

---

व्यवाय रूप काम धर्म को प्राप्त कराकर सबको वशीभूत करते रहते हैं, अतः रासपञ्चाध्याय में श्रीकृष्ण को साक्षात् मन्मथ मन्मथ-कन्दर्प दर्प दमन रूप से कहा गया है, जिस प्रकार- चक्षुषश्चक्षुः। शब्द से निखिल नेत्रों के एक मात्र नेत्र का बोध होता है, उस प्रकार जानना होगा। अतएव जागतिक काम रूप स्मर का कारण ईश्वर होनेपर भी स्मर का आवेश सर्वथा दुष्ट है। जगदावेशवत्-जगत्-ईशर का अंश होनेपर भी जगत् के किसी पदार्थ में भोक्तृभोग्य रूप में आवेश होना सर्वथा दोषावह है, उस प्रकार जानना होगा ।।४२।।

प्रपञ्चगत माहात्म्य वर्णन के पश्चात् निज धामगत माहात्म्य को कहते हैं, श्रीबृन्दावन के अभिन्न प्रकाश स्वरूप श्रीगोलोक नामक निज धाम के क्रमशः निम्न देश में हरिधाम, महेश्वर धाम, एवं देवी धाम है, एवं उस उस धाम में शास्त्रादि प्रसिद्ध प्रभाव समूह का जो

